# कथाकौमुदी

## प्रथमो मयूखः

उत्तर प्रदेश संस्कृत अकादमी
द्वारा पाँच हजार रुपये के
विशेष पुरस्कार से सम्मानित


डॉ० प्रभुनाथ द्विवेदी
प्राध्यापकः संस्कृत-विभागे
काशी विद्यापीठम्, वाराणसी

## आमुखम्

देशेऽस्माकं कथानां महत्त्वं विद्यत इति सुधियां न निगूढम्। विशेषतो बालानां सुखावबोधाय कथा विरचिता या वर्तमानेऽप्यास्वाद्यमानाः प्रीतिं जनयन्ति। कथासाहित्यस्य वैचित्र्यं पर्यालोचयन्तः पाश्चात्त्या मनीषिणस्तासु प्रकाशितां सरणिं साधु विशदयन्ति येन निखिलमपि ज्ञानविज्ञानं वर्तमानपरम्परां समीरयति। वैदिककालेऽपि कथासु ज्ञानकर्मादिरहस्यं निपुणं निभालितम्। यथा विषयस्य स्वरूपमुन्मीलितं स्यात्, यथा मन्त्राणां तात्पर्यं विवित्सुभिरविकलमधिगम्येत, यथा च चमत्कारो न हन्येत, तथा प्रयत्नो विहितः। प्रबोधनदृशापि कथाः प्रतताः, तत्त्वस्यापि प्रकाशनं कृतम्, किन्तु कुत्रापि कथायाः स्वारस्यं नापाकृतम्। कथासाहित्ये कल्पनानिर्मितं जगद् विविधं विलसति। नेतृपरिकरे सर्वमेव कल्पनाप्रसूतमाख्यानं भङ्गीभिराश्लिष्टं चित्रं चरितं चोरूररीकरोति, येन विश्वस्मिन् विधानस्यास्य वैशिष्ट्यं परीक्षकैः शस्यते। बाणभट्टेन प्रीतिः कुतूहलं चेति तत्त्वद्वयं कथायाः परममुपकारकमिति समुद्घुष्टम्, अन्यच्च कुत्रचिद् हास्यस्य विलासः, कुत्रचिदुत्प्रासः, कुत्रचिद् व्याजस्तुतिः, कुत्रचित् सदुपदेशः, कुत्रचित्सरसकाव्यसन्ततिरिति विपुलभावपरिपाटी नृत्यति। मनोहरपद्यैः स्निग्धा सूक्तिभिरविरतमालिङ्गिता कविताकामिनी सलीलं पदं विन्यस्यति। एवं कथा कस्य विनोदाय न प्रभवति, कस्य च ज्ञानविवर्धनाय नोपैति।

नीतिकथा लोककथा चेति विभागः कथायाः समीक्षकैर्वितीर्णः। नीतिकथायां मनोहरकथाभिस्त्रिवर्गस्योपदेशः प्रकाशितः। तत्र धर्मार्थकामानां भङ्ग्या प्रवृत्तिर्लक्ष्यरूपेण साध्यते, मोक्षस्तु न प्रवर्तते। कथासु पशवः पक्षिणश्च विनियुक्ताः। कथानामुद्देश्यमस्ति व्यवहारस्य आचारस्य राजनीतेश्च ज्ञानम्। सरलभाषया एतत्सम्बद्धा विषया निर्मलमुपवर्णिताः। सुकुमारमतीनां छात्राणामपि प्रबोधनं कथाभिर्भवतीति चरमं साध्यम्।

एकतः कथाभिरभिप्रेत उपदेशः, अपरतश्च व्यवहारभाषायाः सौन्दर्यम्। लोके व्यवहृताः प्रयोगास्तत्र तत्र कथासु सन्निविष्टाः परमं साचिव्यं

वितन्वन्ति । लोकजीवनस्य निसर्गस्य च स्वाभाविकं कामनीयकं क्रोडीक्रियते । यानि खलु परिचितानि सन्ति, तान्येव कथासु प्रोतान्यनायासेनार्थं ख्यापयन्ति कुतूहलं च जनयन्ति । एवं चकास्ति व्यवहारनयेन कथासामग्री ।

ऋग्वेदे उपनिषत्सु पुराणेषु महाभारतादिषु च नीतिकथाः समुपलालिताः । बौद्धजातकेषु कथानामपूर्वः सङ्ग्रहः समुपलभ्यते । पञ्चतन्त्रं तु कथासाहित्यस्य महनीया कृतिर्विद्यते । पञ्चतन्त्रस्य विश्वस्य भाषास्वनेकेऽनुवादा उपलभ्यन्ते । विश्वस्मिन् बाइबलमनु पञ्चतन्त्रस्यैव प्रख्यातिरस्ति । अस्य प्रायः पञ्चाशदधिकद्विशतसंस्करणानि विश्वस्य विविधासु भाषासूपलभ्यन्ते । अस्य कथानां प्रचारः ग्रीसरोमादिदेशेषु प्राचीनकालेऽप्यासीत् । नीतिकथाप्रकारे हितोपदेशस्य महत्त्वं जागर्त्येव । नीतिकथायामुपदेशस्य प्राधान्यमस्ति, किन्तु लोककथायां विनोदनस्य । लोककथानां प्राचीनतमः सङ्ग्रहो गुणाढ्यकृता बृहत्कथा विद्यते । लक्षपद्यपरिमितेयं पैशाचीप्राकृते निबद्धाऽसीत् । इयं साम्प्रतं नोपलभ्यते । अस्याः संस्करणत्रयमुपलभ्यते—बुद्धस्वामिनिर्मितो बृहत्कथाश्लोकसङ्ग्रहः, क्षेमेन्द्रविरचिता बृहत्कथामञ्जरी, सोमदेवप्रणीतः कथासरित्सागरश्च । कथासरित्सागरस्य वैशिष्ट्यं सर्वैरूरीक्रियते ।

संस्कृते कथासङ्ग्रहान्तराण्यपि प्राप्यन्ते, यथा वेतालपञ्चविंशतिका, सिंहासनद्वात्रिंशिका, शुकसप्ततिः पुरुषपरीक्षा, भोजप्रबन्धः, अवदानशतकम् जातकमाला च ।

वर्तमानकालेऽपि कथासंग्रहाः प्रकाशिताः सन्ति । तत्र सन्दर्भे भेदः । अन्यासु भाषासु कथाया यत् स्वरूपं विद्यते, तस्य प्रभावः संस्कृते समुपलभ्यते । प्राचीनकाले प्राप्तानां वर्तमाने चोपलब्धानां कथानां रीतिमनुसृत्य कथालेखकाः कथा निबध्नन्ति । तत्र वैचित्र्यं निरर्गलमञ्चति । अस्य वैचित्र्यस्य परीक्षणं नितरां काम्यते । भारतस्य विविधासु भाषासु आंग्लभाषादिषु च निबद्धासु कथासु विचित्रता वस्तुसमृद्धिश्च प्रकाशते । संस्कृतेऽपि वर्तमानसन्दर्भराशेः परिपोषस्तासु तासु कथासु साधित इत्यविशङ्कमुदीर्यते ।

वर्तमाने कथानां यन्मानं स्वीकृतं विद्यते, तस्य सन्निवेशः संस्कृतेऽपि काम्यते । कथानां परिष्कृतं स्वरूपं संस्कृतेऽपि राजताम् । यदा नववस्तु वैचित्र्यसम्भूषितं भवति, तदा तन्मनोहरति । अनुदिनं समाजे नवत्वं

परिलक्ष्यते, नेतॄणामपि विविधप्रकाराः, वस्तूनामपि विविधप्रकाराः। कथं तत्र तत्र विशिष्टस्थलेषु परस्परसम्पर्केण विच्छित्तिरुदेति, कथं च कस्मिंश्चित् क्षणे परिवर्तनेन सङ्केतः प्रतन्यते, कथं परिमित-वचनविन्यासेन समीहितमवतार्यत इति सर्वं विमृश्य यदा कथाः प्रणीयन्ते तदा कथाया अनवद्यं संस्थानमुपतिष्ठते। सहृदयानामेतादृशी आकाङ्क्षा प्रवर्तते। न केवलं संस्कृते निबद्धस्य साहित्यस्य प्रवृत्तयः सम्यगाकलनीयाः, अपितु शास्त्राणां विशेषतो मनोविज्ञानस्य समाजशास्त्रस्य चोपयोगः कर्त्तव्यः। अनयैव रीत्या कथा निबन्धनीयाः। विश्वकथासाहित्ये संस्कृतकथानां समीचीनं स्थानं स्यादिति धिया वाचः प्रतायन्ताम्।

प्रकृते डॉ०प्रभुनाथद्विवेदिना कथानां सङ्ग्रहः प्रकाश्यते—कथा-कौमुदीति। अत्र गङ्गास्नानं मतदानं वरान्वेषणम् इत्यादिकथाः सङ्कलिताः सन्ति। सर्वासु कथासु वर्तमानसमस्या निरूपिताः सन्ति। लोकस्य कीदृशी प्रवृत्तिः, कथं च विविधेषु नियोगेष्वविचारितमाचरितम्, कथं लोकव्यवहारस्यानधिगमः, कथञ्च मनुष्यस्य जीवने विकाराणां प्रसार—इत्येते विषयाः कथासु यथाप्रदेशं नैपुण्येन विनिवेशिताः। समाजे विद्यमानानां दोषाणां प्रकाशनं कथाकारस्य लक्ष्यमस्ति। दोषमाकलय्य नरो मुच्येत कष्टादिति मनीषितं स्फुटीभवति। लोकजीवने यत्कमनीयमस्ति, तस्य सङ्ग्रहः काम्यते, यद् विकृतमस्ति तस्य च परित्यागः। कथासु भङ्ग्यैतत्सर्वमुन्मीलितमस्ति। डॉ० द्विवेदिनः शैली व्यङ्ग्यप्रधाना। अत्र हास्यस्य मनोहराभिव्यक्तिर्नितरां मोदते। वस्तुनोऽपि वैशिष्ट्यं प्रकटीभवति रीतेश्चापि। कथासु न कुत्रापि कश्चन व्याघातः। सर्वत्राभीप्सितस्य समीचीनं वर्णनं हृद्यञ्चोपस्थापनमस्ति। कथाप्रणयने डॉ० द्विवेदी पूर्णतः सफल इत्यभिप्रैमि। अयं कथासङ्ग्रहः संस्कृतकथासाहित्ये समादृतो भवेदिति कामये।

— डॉ० अमरनाथपाण्डेयः
आचार्योऽध्यक्षश्च
संस्कृत-विभागः
काशीविद्यापीठम्
वाराणसी।

दीपावली
९.११.८८ ई०

# कथा-कथ्यम्

अथ कथ्यते कथा। अस्ति वाराणस्यामाकाशवाणीकेन्द्रम्। तत्र डॉ० रजनीशप्रसादमिश्राः देववाणीसमाराधका अधिकारिपदमलङ्कुर्वन्ति। ते महानुभावा एकदाऽस्मद्विभागे स्वप्रयोजनवशादागतवन्तः। तत्र समुदिते संल्लापे आकाशवाण्याः संस्कृतकार्यक्रमजिज्ञासायां तैः भणितम्—"प्रदत्त-विषयमधिकृत्य समीक्षात्मिकाः वार्ताः बाहुल्येन प्राप्यन्तेऽस्माभिः किन्तु मौलिकलघुकथानामभावमनुभवामः। यदि भवद्भिः संस्कृतलघुकथाः प्रस्तूयन्ते, ताः नूनं संस्कृतकार्यक्रमे लब्धपदाः भविष्यन्ति।" कतिपयैरे-वाहोभिः मया 'गङ्गास्नान'मिति प्रथमा कथा निर्माय तेभ्यः समर्पिता यथाकालञ्च आकाशवाण्याः वाराणसीकेन्द्रतः प्रसारिता। ततः बालप्रयास-बलेन विरचितानामाकाशवाणीप्रसारितानाञ्च लघुकथानामिदं सङ्कलनं मिश्रप्रसादमिश्रीभूतमुपहरामि भवद्भ्यः।

कथाकौमुद्याः प्रथममयूखाविष्करणे पथ्यं पाथेयमस्ति विद्यातपःपूतानां विद्वद्वरेण्यानां काशीविद्यापीठस्थसंस्कृतविभागाध्यक्षपदभाजां परमश्रद्धेय-गुरुवर्याणां प्रो०अमरनाथपाण्डेयानामाशीर्वचनम्। अयोध्यास्थितस्य साकेतमहाविद्यालयस्य पूर्वप्राचार्याणां सुरभारतीसेवासमर्पितानां कवि-सहृदयानां डॉ०राजदेवमिश्राणां प्रोत्साहनैरेव प्रकाशनप्रवृत्तिरासीत्। कथाकौमुदीयं यद्विशदतया विराजते तत्सर्वं सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयीयव्याकरणविभागस्थोपाचार्यैश्शब्दब्रह्मोपासकैः डॉ०श्रीकान्त-पाण्डेयैः पूर्वरूपसंशोधनेन साधितम्। राष्ट्रियसंस्कृतसंस्थानस्योपनि-देशकैः डॉ० काशीनाथतिवारीमहोदयैः ओबरास्थितस्य राजकीयमहा-विद्यालयस्य संस्कृतविभागाध्यक्षैः श्रीविद्याशङ्करत्रिपाठिमहाभागैश्चाहं संवर्धितोत्साहः। एतेषां सर्वेषां महानुभावानां मनांसि मम प्रणतिकथाभिः प्रीतान्यामोदनिर्भराणि स्युरिति मे मनीषा। स्यादियं कथाकौमुदी वृद्धानां नयनानन्ददायिनी प्रीतिप्रसारितैर्मयूखैः हृत्कुमुदविकासिनी च। बालानां सुखबोधाय मूलकथानां हिन्दीरूपान्तरमत्र संयोजितम्। अतः परं कथाकौतूहलकथायां मे जिह्वा जिह्लेति जल्पन्तीति सहृदयाः प्रमाणम्।

भारती सुप्रसन्ना स्याद्विदग्धमुखमण्डना।<br>
तत्पादयोर्विकीर्णोऽयं कथानां कुसुमाञ्जलिः॥

भ्रातृद्वितीया<br>
११.११.१९८८ ई०

विदुषां वशंवदः<br>
प्रभुनाथद्विवेदी।

# समर्पणम्

कीर्तिकथाशेषाणां

परमश्रद्धेयपितृपादानां

श्रीमन्नन्दकिशोरद्विवेदिनां

पुण्यस्मृतौ

समर्पितेयं

कथाकौमुदी

# अनुक्रमः


| कथा | पृष्ठाङ्काः |
|---|---|
| १. गङ्गास्नानम् | १ |
| २. मतदानम् | ६ |
| ३. वरान्वेषणम् | ११ |
| ४. दूरभाषः | १६ |
| ५. शिखापण्डितः | २१ |
| ६. योगिराजः | २६ |
| ७. सुकन्या | ३१ |
| ८. बकमातुलः | ३७ |
| ९. अथेतिपण्डितः | ४२ |
| १०. यौतुककौतुकम् | ४७ |
| ११. प्रतिवेशी | ५२ |


## हिन्दी-रूपान्तर


| | |
|---|---|
| १. गङ्गास्नान | ५७ |
| २. मतदान | ६३ |
| ३. वर की खोज | ६९ |
| ४. टेलीफोन | ७५ |
| ५. शिखापण्डित | ८१ |
| ६. योगिराज | ८७ |
| ७. सुकन्या | ९३ |
| ८. बगुला मामा | १०० |
| ९. अथेतिपण्डित | १०६ |
| १०. दहेज का तमाशा | ११२ |
| ११. पड़ोसी | ११८ |
| शुद्धिपत्रम् | १२४ |

: १ :

## गङ्गास्नानम्

वृद्धो मे पितामहः प्रायेण श्लोकमिममुच्चैर्गायति स्म—

"पादमूले त्रिनेत्रस्य काश्यां वासः सुदुर्लभः ।
तत्रापि जाह्नवीतोये मज्जनं सुकृतैर्भवेत् ॥"

धार्मिकाः कथयन्त्येव—काशीवासस्य सर्वोपरिलाभः गङ्गास्नानं विश्वनाथदर्शनञ्चैवास्ति । काश्यां वसतिं विधाय येभ्यो गङ्गास्नानं न रोचते ते नराधमाः सन्ति । पितामहमुखान्निर्गतानामेतेषां वचनानां प्रभावो बालभावे स्थितस्यापि मे मनसि दृढतरो जातः । समुद्भूतश्च मे विनिश्चितोऽभिलाषः—'यदि जीवने कदाचित् काशीवासस्यावसरप्राप्तिर्भविष्यति, सनियमोऽहं प्रतिदिनं गङ्गास्नानं करिष्ये ।'

कालस्य त्वरिता गतिः । अध्ययननिरतस्य मम शैशवमपगतम् । युवावस्थां प्राप्य कृतदारपरिग्रहोऽहं गृहस्थाश्रमे प्रविष्टः। ईश्वरस्य कृपया मम दृढेच्छाशक्तेः परिणामेन वा वाराणस्याः एकस्मिन् विश्वविद्यालये प्राध्यापकपदे नियुक्तिः प्राप्ता । पदभारं गृहीत्वा यदाऽहं सर्वतोभावेन व्यवस्थितोऽभवम्, गङ्गास्नानसम्बन्धिनी मे श्रद्धा प्रादुरभूत् । नित्यं प्रातःकाले गङ्गास्नानं कर्त्तव्यमस्तीति विनिश्चित्य, स्नानाय प्रयुज्यमानाः कियन्तो घट्टाः ? तेषां किं महत्त्वमिति सर्वं मित्राणि सम्पृच्छ्य ज्ञातवान् । इत्थं मया निर्णीतं 'पञ्चगङ्गा' इत्याख्ये तीर्थघट्टे स्नानविधिः करणीयः । यतो हि पञ्चगङ्गाघट्टो मम निवासस्थानात् समीपतमो धार्मिकदृष्ट्या महत्त्वपूर्णश्चास्ति ।

एकदा सायंकाले पञ्चगङ्गाघट्टं यावन्मार्गावलोकनमकरवम् । ईश्वरगङ्गीस्थितान्निजवासभवनान्निष्क्रम्य, मृत्युञ्जयमहादेवमन्दिरपार्श्वान्निर्गत्य भैरवनाथमन्दिरस्य दक्षिणवर्ती भूत्वा, चौखम्भासरणिमतिक्रम्य वीथीषु इतस्ततः संचरन् जनैः सङ्क्रान्तेषु चत्वरेषु दृष्टिं पातयन् मार्ग-

विषयकं सन्देहं यत्र तत्र पृष्ट्वा निवारयन्, मार्गपरिचययात्राया अन्तिमे चरणे बिन्दुमाधवमन्दिरस्याजिरं प्राप्य, पञ्चगङ्गाघट्टेऽवतितीर्षुः अहं सुदीर्घां प्रस्तरसोपानपरम्परां कृच्छ्रादिव विलङ्घ्यावातरम्। व्यलोकयम् च पुण्यसलिलां सलीलं प्रवहन्तीं भगवतीं भागीरथीम्। शिरसा प्रणम्य, तटं गत्वा तत्रैकस्मिन् काष्ठफलके स्वास्थितिं विधाय पवित्रं जलममृतोपममुपस्पृश्य किञ्चिन्मात्रं क्षणमुपाविशम्। ततः उत्थाय तमेव मार्गमनुसरन् स्वभवनमाजगाम। एवं प्रतिनिवृत्य मार्गचिह्नानि चित्ते सम्प्रधार्य वीतचिन्तोऽभवम्। तस्मिन् क्षणे आसीच्च मे मनसि—'भैरवनाथमन्दिरपर्यन्तं मार्गं तु सुविहितं चलनयोग्यम्। किन्तु तत्पश्चाद्वर्तिन्यो वीथयः. याः घट्टं प्रत्यस्मान्नयन्ति, संकीर्णतया वक्राकारतया मतिभ्रमं जनयन्ति। वीथीमुभयतोऽभ्रंलिहानि भवनानि विराजन्ते, यैः निरुद्धाः सूर्यरश्मयोऽत्र निष्फला भवन्ति। ज्येष्ठातपदिवसेष्वप्येताः वीथयः तमोमग्नास्तिष्ठन्ति। नूनं कालिदासेन वाराणसी न कदापि दृष्टा, अन्यथा कथं सः हिमवतः कन्दराणामौदार्यं प्रशंसेत्, या दिनेषु सूर्यभीतान् तमोनिचयान् स्वान्तेषु शरणं दत्त्वा रक्षन्ति। एताः वीथयोऽपि गुणेनानेन ताः कन्दराः तुलयितुमलं सन्ति। वीथीनां स्वस्थानाद् विभ्रष्टानि प्रस्तराणि, तत्रस्थानां भवनानां जीर्णाः भित्तयोऽसंशयं भयमुत्पादयन्ति। पराकाष्ठा खलु दृश्यते मलिनतायाः एतासु वीथीषु। स्मरणमात्रेणैव हृदि कम्पो जायते। एतादृशी दुर्व्यवस्था पुण्यावहेषु तीर्थस्थलेषु कथं सहन्ते जनाः? अवश्यमेव तत्रस्थाः निवासिनः उदासीनाः यथाकथंचित् स्वजीवनं यापयन्ति। अनुदिवसं सहस्राधिकाः स्नानार्थिनोऽन्ये च जनाः तेनैव मार्गेण यान्ति मुखानि पिधाय नासिका अवरुद्ध्य च। भवतु, मयापि तेनैव मार्गेण गन्तव्यं वर्तते। मनःक्षोभमुपशम्य ब्राह्मे मुहूर्ते गङ्गास्नानायावश्यमेव गन्तव्यमिति निश्चित्य शयनमभजम्।

अन्येद्युः ब्राह्मे मुहूर्ते शयनादुत्थाय शौचादिक्रियां समाप्य गंगास्नानार्थमुदाचलम्। भैरवनाथमन्दिरं यावन्मार्गं व्यतीत्याग्रे गन्तुं प्रवृत्तेन मया दृष्टं, दशाधिकाः गावः परस्परं संसक्ताः मार्गं व्याप्य रोमन्थमभ्यस्यमानाः तिष्ठन्ति। कथं कश्चिद् गच्छतु? पञ्चषा वृद्धाः स्त्रियोऽपि किञ्चिद्दूरं कस्यचिदागमनं प्रतीक्षमाणाः मामवलोक्य हर्षिता जाताः, यदेता अवश्यमेवायमपसार्यानवरुद्धं मार्गं प्रशस्तं दास्यतीति। मयापि

गन्तव्यमेवासीत् । अतः कथं कथञ्चित्ताः गाः अपसार्य स्नानार्थिनोस्ताः वृद्धाः अनुसरन् अगच्छम् । चौखम्भासरणेः विनिष्क्रम्य यदा वयं सङ्कीर्णायां वीथ्यां प्रविष्टाः सहसैव सर्वं तिमिराच्छन्नं जातम् । यतो हि विद्युदापूर्तिः बाधिता । वाराणस्यां कृतावासा जना अत्र विद्युदापूर्तेः दुर्व्यवस्थां पूर्णतया जानन्ति । अनियतगमनागमनव्यापारवतीयं देवता वाराणस्यां स्वकीयां चञ्चलेत्यभिख्यां प्रमाणीकरोतीत्यसन्दिग्धो विषयः । मार्गपरिचयवशाद् वृद्धानां गमनन्तु निर्बाधमेवासीत् किन्त्वलक्षितनतोन्नतभूमौ मे पदानि विषमीभवन्ति स्म । हे देवि गङ्गे ! मार्गं सालोकं कुरु, मनसा संस्मृत्यैव, यदा सावधानं पदन्यासमकुर्वम्, तदैव ममोपरि सहसा गृहावस्कारराशिः पपात । स्तब्धोऽहं जातः । रजोराशिना सह रोटिकाखण्डानि, फलत्वचोऽन्यानि चापद्रव्याणि मम शरीरमनुलिम्पन्ति भूमौ विकीर्णानि । ततोऽपसृत्य पश्चाद्ग्रीवाभङ्गेन यदा दृष्टिः उत्क्षिप्ता, तदा मन्दप्रकाशनिस्सरणद्वारभूतोऽनावृत्तकपाटको गवाक्षोऽदृश्यत । मयानुमितं यदनेनैव गवाक्षमार्गेण कापि गृहिणी निजाट्टमार्जनफलं मम शिरसि समर्प्यान्तर्गता । कीदृशीयं विडम्बना, वीथीमनवेक्षमाणा एता नार्योऽनपेक्षितवस्तूनि सहसैवाधः पातयन्ति । उच्चावासानामिदमधमत्वं विचार्य क्षुब्धं मे हृदयम् । भगवतोऽनुकम्पयैवाक्षतशरीरोऽहमिदानीं स्नानाय गच्छामि, यतो हि तस्मिन्नवस्करे नासीत् किमप्याघातकं वस्तु ।

कथञ्चित् पञ्चगङ्गाघट्टोऽनुप्राप्तः । सोपानपरम्परावतीर्णं स्नानेच्छुकं दृष्ट्वा घट्टपण्डिताः मामालक्ष्य—अत्रेहि अत्रेहीत्युच्चैः आकारयन्ति स्म । तेषामाह्वानैरनाकृष्टोऽहमेकस्मिन् काष्ठफलके वस्त्राणि निधाय गङ्गास्नानमकुर्वम् । तत्स्थानस्य घट्टपण्डिताय सङ्कल्पपूर्वकं दक्षिणाद्रव्यं समर्प्य यदा गन्तुमारब्धवान् तदैव तस्य पार्श्ववर्ती एको घट्टपण्डितः स्वगतमेव मां प्रति प्राह—"कस्ते दोषः ? संगतिस्तु दैवाधीना । वराको भवान् वञ्चितोऽस्ति । स तु शुद्धं सङ्कल्पवाचनमपि न जानाति । केवलं चन्दनपङ्किलभालस्तिष्ठति । पृच्छत्वार्यः स्नातस्य तस्य कियन्तो दिवसाः व्यतीताः ?" एतत्तस्य वचनं श्रुत्वाऽपरोऽपि फूत्कर्तुमारेभे–"याहि, याहि । मौन एव स्वनियोगमशून्यं कुरु । व्यर्थं ह्यन्येषां चिन्तया खेदं भजसि । कथय रे, ते अधोवस्त्राणि कदा प्रक्ष्याल्यन्ते ? ईर्ष्यया मयि हीनत्वमारोपयसि ।" पुनश्च मामवादीत्—"गच्छत्वार्यः, चाण्डालोऽयं बाल्यकाला-

देव स्वापलापैः अन्यान् दूषयति । इदानीमपि एवमेव प्रलपति ।" भूविवरे राजकुमारोदरे च स्थितयोः सर्पयोः अन्योऽन्यस्य रहस्यभेदिनीं कथां संस्मृत्य, अहमपि, 'इदमनयोर्वृत्तिवैरम्' इति विचार्य सस्मितं द्वयोः उपरि दृष्टिनिक्षेपं कृत्वा ततोऽपसृतवान् ।

सोपानपरम्परामारुह्य मन्दिरेषु देवानां दर्शनं कृत्वा प्रस्थितस्य मे दृष्टौ एकस्मिन् स्थले जनसमूहः आपतितः । जिज्ञासया यावत्तत्र गच्छामि तावदुच्चैः विलपन्तं चतुःपञ्चवर्षीयं शिशुमपश्यम् । जनाः दूरत एव तन्नाम पृच्छन्ति स्म । केचनागत्य तं दृष्ट्वा निवर्तन्ते स्म । तत्र गतेन मया सः उत्थाय क्रोडे संस्थाप्य, अश्रूणि प्रमृज्य सान्त्वनावचोभिर्विरतक्रन्दनः कृतः । स तु भीतनेत्राभ्यां सर्वत्र पश्यति स्म । पृच्छमाणे सति केवलमम्बाऽम्बेति चोच्चारयति स्म । बालकं किमप्याश्वस्तं विज्ञाय जनाः शनैः शनैः यथाभिमतं स्थानं जग्मुः । यदि कोऽपि रक्षिपुरुषो दृश्येत, तमेनं बालकं समर्प्याहमपि स्वगृहं गच्छामीति मनसि कृत्वा इतस्ततः रक्षिपुरुषमन्विष्यमाणा मे दृष्टिर्निष्फलेवासीत् । मया बहुधाऽनुभूतं, प्रायेणैतादृशेष्ववसरेषु न कोऽपि राजकीयो रक्षिपुरुषो दृश्यते । इदानीं किं करोमीति चिन्ताग्रस्तं मामेकः सज्जनः उपदिष्टवान्—"मन्दिरेषु कस्यचित् पूजकस्य हस्ते निक्षिप्य बालकं गच्छतु भवान् । यस्याप्ययं बालको भवेत् सः स्वयमेवान्विष्यमाणः इतः आगत्य नेष्यति ।" किन्तु मह्यं नेदं रोचते स्म । एतस्मिन्नन्तरे एका स्त्री विलपन्ती तत्रागतवती । तां दृष्ट्वा सोऽपि शिशुः अम्बेत्याकार्य बलादेव मम क्रोडादवरुह्य तां प्रति ससर्प । सापि झटित्येव तमुत्थाय वक्षःस्थलेन संश्लिष्य बहुधा चुचुम्ब । कारुणिकं दृश्यमासीत् । प्रफुल्लवदनं बालकं गतव्यथां च तां प्रेक्ष्य तत्रस्थः सर्वोऽपि जनः प्रसन्नो बभूव । अथ भर्त्सनास्वरेण तां स्त्रीं प्रबोधयता मयोक्तम्—"शोभनं पुण्यार्जनं क्रियते शिशुमपहाय । न जानासि कीदृशोऽयं कालः समुपागतः ? बालोऽयं कस्यचिदपराधिनः हस्ते निपतितः कथं त्वया प्राप्स्यते ? जीवनमप्यस्य नारकीयं स्यात् । अपराधिनः एतादृशान् बालकान् अन्विष्यन्ति, अवसरं प्राप्यापहरन्ति, तेषामङ्गभङ्गं कृत्वा भिक्षावृत्तिं कारयन्ति । शिशुरक्षणान्मा प्रमद ।"

मम वचनं श्रुत्वा पुत्रमुखं निरूप्याश्रूणि विमोचयन्ती साऽब्रवीत्—"कथं भवन्तं प्रति कृतज्ञतां ज्ञापयामि ? ईश्वरो मयि दयालुः । प्रतिदिन-

मस्य जागरणात्पूर्वमेवाहं गङ्गास्नानं कृत्वा गृहं प्राप्नोमि। अद्य विलम्बेन जागरितया मया सहैव अस्यापि निद्राभङ्गो जातः। यदाहं गङ्गास्नानायोदाचलम्, अयमपि मामनुसरन्नेव निर्गतवान्। इममुत्थायास्य पितुः पार्श्वे कृत्वा, तं प्रतिबोध्यानर्गलं द्वारकपाटं पिधाय झटित्येत्र गृहाद् बहिर्निगतवती। सम्भावये, यदस्य पिता पुनः प्रसुप्तः। अयमपि बहिरागत्यात्र प्राप्तः। अहं तु निश्चिन्ततया स्नानं कृत्वा यदा प्रतिनिवृत्ता तदा गृहे इमं नापश्यम्। पतिं विगतनिद्रं कृत्वा यदाऽपृच्छम्, सोऽपि व्याकुलमना अस्यान्वेषणाय निर्गतवान्। अहमपि विलपन्ती गृहाद् गृहं गत्वा जनान् पृच्छमाणाऽत्रागत्य भवत्क्रोडे इममपश्यम्। अयमेवास्य वृत्तान्तः" इत्युक्त्वा सा पुत्रमादाय स्वगृहं गतवती। अहमपि विगतचिन्तोऽभवम्।

अस्मिन् प्रपञ्चे महान् विलम्बो जातः। लङ्घिताध्वाऽहं यावद् गृहे प्रविशामि, तावच्छोकाकुलां पत्नीमपश्यम्। सा कातरस्वरेण मामवादीत्—"एतावान् विलम्बः कृतो भवता। अनिष्टाशङ्कया मम प्राणास्तु गतप्राया एव।" सहासं मया प्रतिवचनं दत्तम्—"अयि भीरु! स्नातुमितो गङ्गां गतोऽहम्। विलम्बक्षमं हि पुण्यं न झटित्येव प्राप्यते।" पुनश्च विलम्बस्य कारणं सविस्तरं मयाख्यातम्। तच्छ्रुत्वा वात्सल्येन द्रवीभूता सा केवलमिदमवोचत्—"स्तुत्यं कृतं यत्करणीयम्। गङ्गास्नानादतिरिच्य पुण्यं प्राप्तम्।"

**कल्पितेयं कथा पुण्या प्रभुनाथेन धीमता।**
**आस्वादयन्तु विद्वांसः ये न हि छिद्रदर्शकाः॥**

## मतदानम्

एवमनुश्रूयते किलैकदा निशीथे क्षीरसागरे शेषशायिनो भगवतो नारायणस्य निद्राभङ्गः सहसैव जातः। मर्त्यलोकात् समुत्थितैः कर्णभेदकैर्ध्वनिभिर्व्यग्रचित्तः सः कमपि गणमाहूय निर्दिष्टवान्—'गच्छ, गवेषय कुतः किमर्थञ्चायं ध्वनिरिति।" सोऽपि गत्वा पुनरागत्य निवेदितवान्—"देव! भूमण्डले भारतवर्षेऽयं ध्वनिःश्रूयते। तत्र कस्मिंश्चिन्निर्वाचनप्रपञ्चे व्यापृता जनाः ध्वनिविस्तारकयन्त्रैः महतीं श्रुतिं व्युत्पादयन्ति। अत्र देवः प्रमाणम्।" एवं विनिवेद्य यदा सः तूष्णीको जातः तदैव देवर्षिर्नारदोऽपि सहसा प्रादुर्भूतः। तथागतं नारदं दृष्ट्वा नारायणो विस्मयविस्फारितविलोचनः स्वागतवचनं व्याहृत्य प्रपच्छ—"भो देवर्षे! इदानीं कुतः? महती मे उत्कण्ठा व्याप्नोति चित्तम्। तत्कथयतु भवान्, व्यपनयतु मे जिज्ञासाम्।" स्मितवदनो नारदो नारायणमाबभाषे—"नास्ति किञ्चिदविज्ञातं नाम भवादृशानाम्। केवलं मां गौरवास्पदं करोति स्वामी। तथापि यदि कुतूहलं भवन्मनः क्रोडीकरोति तच्छ्रूयताम्। जानात्येव भवान्, भारते गणतन्त्रीया शासनप्रणाली वर्तते। तत्रेदानीं लोकसभायाः सङ्घटनाय निर्वाचनयज्ञः प्रवर्तते। तस्मिन् यजमानभूताः नेतारोऽहर्निशं स्वपक्षाभ्यर्थिविजयकामाः प्रचारे संलग्नाः उच्चैर्निनदमाना विवदमानाः ध्वनिप्रदूषणं कुर्वन्ति। तत्र मतदानरूपा पूर्णाहुतिः। मतगणनायाः पश्चाद् विजयघोषणा भवति, तदेव यज्ञफलम्। विजयी प्रत्याशो एव कल्पवृक्षाधिष्ठितं स्वर्गमिव लोकसभामधिरूढो भवति।" "के नेतारः"? इति दरिद्रस्य बुभुक्षेव नारायणस्य जिज्ञासां विवर्धमानामनुभूय नारदः प्राह—"इदानीं 'नेता' इत्यस्यान्वर्थसंज्ञा न भवति। सम्प्रति या मान्यता वर्तते तामधिकृत्य नेतारं परिभाषयामि—

> यस्तु सर्वास्ववस्थासु मनोवाक्कर्मभिः सदा।
> नीयते व्यभिचारं प्रत्यात्मनो हितकाम्यया॥
> मतिभ्रमं समुत्पाद्य जनानाञ्च गृहे-गृहे।
> विनयः सन्नयति स्वार्थं स हि नेता कथ्यते॥

एते नेतारो द्विधा सन्ति—शाश्वतिकाः सामयिकाश्च। शाश्वतिकाः नेतारः आनुवंशिका अपि कथ्यन्ते। तेषां कुले गर्भादेव परिपक्वनेतृगुणसम्पन्नः शिशुः प्रादुर्भवति। सामयिकास्तु ते ये केनापि प्रकारेण स्वार्था-

नुसन्धाने प्रवृत्ता भवन्ति । इमे नेतारः कस्मिन्नपि राजनीतिकदले स्व-स्थितिं विधाय स्वानुयोगे रमन्ते । यदा तेऽनुभवन्ति यदस्माकं स्वार्थपूर्तिः बाधिता, तत्क्षणादेव दलं परित्यज्यान्यदलोन्मुखी भवन्ति, स्वकीयं नवीनं दलं कल्पयन्ति, निर्दलीया वा भवन्ति । यो नेता न भवति तस्य निर्वाचने नाधिकारः । निर्वाचनानन्तरं यस्य राजनीतिकदलस्य बहुमतो भवति स एव शासनारूढो भवति । स्वल्पमता विरोधिनः तं सत्तारूढं दलमनुशासयन्ति ।

निर्वाचनमपि भारतवर्षे बहुधा भवति । कदाचिल्लोकसभायाः कदाचिद्विधानसभायाः कदाचिद्ग्रामसभायाः । तत्तत्सङ्घानामपि निर्वाचनं महत्त्वपूर्णं भवति । क्वचिदध्यापकसङ्घाः क्वचिदधिकारिसङ्घाः क्वचित्कर्मचारिसङ्घाः इति सङ्घाः त्वपरिमिताः । सर्वत्रापि मतदानमनिवार्यम् ।"

"किमिदं मतदानमिति ?" नारायणः पुनरपृच्छत् । नारदो विहस्यावोचत्—"धन्योऽसि देव ! जगन्नियन्ताऽपि मतदानं न जानासि ?" भीतो नारायणः किमपि संस्मृत्य शनैरब्रवीत्—"देवर्षे, उच्चैर्मा वद । यदि लक्ष्मीः शृणोति, साऽवश्यमेव मामुपहसिष्यति । ब्रह्मपुत्र ! पुराणेषु दानस्य बहवो भेदा निरूपिताः किन्तु मतदानं तु तत्र क्वचिन्न दृश्यते । आख्याहि किमिदं रहस्यम् ?"

नारदोऽपि निर्मायोपदेशमुद्रां सन्देहनिवारणमारब्धवान्—"प्रभो ! यथा सुकृतिनो जनाः परोपकाराय विविधं दानं कुर्वन्ति तथैवेदं मतदानमपि परोपकारायैव भवति । यथा द्रव्यदानमन्नदानं वस्त्रदानं जलदानं भूदानं गोदानं कन्यादानं विद्यादानमित्येतानि बहूनि दानानि प्रचलन्ति तथैवेदं मतदानमपि वर्तते । मतदानस्य महिमा पाखण्डपुराणे बहुधा गीतो दृश्यते—

**दानं द्रव्यान्नवस्त्राणां कन्यादानं महत्फलम् ।**
**मतदानं तथैवात्र सर्वदानाद्विशिष्यते ॥**

यदि मतदानमहिमानं भवान् श्रोतुमिच्छति, श्रावयाम्यहं वीणास्वरैः संगतमिमम् ।"

उत्कमना नारायणः प्राह—"नहि, नहि नारद ! किमनेन श्रुतेन ? अहन्तु प्रत्यक्षमेव मतदानं द्रष्टुमुत्सहे । अस्ति कश्चिदुपायः ?"

नारदो विहस्याकथयत्—"जगत्स्वामिन् ! कथं बाल इव पृच्छसि ? किं दुष्करं नाम भवताम् ? अनुसरणचतुरश्चतुराननसुतोऽस्ति । वेष-परिवर्तनं कृत्वाऽभीष्टं साधयावः । तदवसरानुकूलं पत्रकारवेषं धारयावः । लभतां भवच्चरणस्पर्शसुखं कलियुगेऽपि भारतभूः ।

अन्येद्युः द्वावेतौ पत्रकारौ भारतवर्षस्य विभिन्नलोकसभाक्षेत्राणां पर्यटनं समारब्धवन्तौ । सर्वप्रथमं काश्यां प्रणम्य विश्वनाथमयोध्यां मथुरां च गत्वा समयस्वल्पतां विज्ञाय राजधानीं देहलीं प्रति प्रस्थितवन्तौ । तत्र भ्रमणं कृत्वा निर्वाचनप्रचारं देशस्य विभिन्नेषु क्षेत्रेषु द्रष्टुकामौ योगबलेन सर्वत्र पर्यटन्तौ तत्तत्प्रान्तानां राजधानीषु, प्रमुखेषु नगरेषु, ग्रामेष्वासमुद्र-हिमालयपर्यन्तमहिण्डन्तौ सर्वराजनीतिकदलानां निर्दलीयानाञ्च निर्वाचन-कार्यालयानपि पवित्रीकृतवन्तौ । एकस्मिन् स्थले ताभ्यां सर्वदलीया प्रचारसभा दृष्टा । तस्यां सभायां सर्वेऽप्यभ्यर्थिनः स्वं स्वं घोषणापत्रं पठन्ति स्म । यदा तत्र पत्रकाररूपिणौ नारायणनारदौ समागतवन्तौ तदैव एकोऽभ्यर्थिमहाशयः स्वं घोषणापत्रं पठितवान्—"सज्जनाः श्रोतारः ! अस्माकं घोषणापत्रं सावधानं शृण्वन्तु भवन्तः । इदानीमस्मिन् देशे महती महर्घता वर्तते । अनाचारात्याचारदुराचारभ्रष्टाचाराः सर्वत्र रक्तबीजवदुज्जृम्भन्ते । नैतिकस्य राष्ट्रीयस्य च चरित्रस्य ह्रासो जातः । कृषकाणां श्रमिकाणां दुर्दशा त्ववर्णनीया । दुर्बलस्य न कश्चिच्छृणोति । विद्यालयेषु न छात्राः पठन्ति नापि शिक्षकाः पाठयन्ति । सर्वे स्वच्छन्दतां भजन्ते । सर्वे स्वार्थं पश्यन्ति, न कोऽपि देशहितं चिन्तयति । जातिवादः क्षेत्रवादोः भाषावादः सम्प्रदायवादोऽन्येऽपि बहवो वादाः प्रवादाः विवादाः राष्ट्रीयैकतां विच्छिन्नमूलां कर्तुं प्रयतन्ते । सर्वेऽपि कर्तव्यविमुखाः केवलमधिकारं वाञ्छन्ति । अतएव यदि भवन्तः राष्ट्रस्य सुरक्षां मर्यादामुन्नतिं प्रतिष्ठां काङ्क्षन्ति देशे सुव्यवस्थां वाञ्छन्ति, राष्ट्र-स्यात्मनश्चापि हितमिच्छन्ति तर्हि निर्वाचनेऽस्मिन्निर्भयाः सन्तोऽस्मद्-दलाभ्यर्थिनं बहुमतेन लोकसभायां स्थापयन्तु । जयतु भारतम् ।"

नारायण इदं श्रुत्वा परं प्रीतः प्रभावितश्चाभवत् । किन्तु नारदः तस्य मोहभङ्गं कुर्वन् प्राबोधयत्—"इदन्तु केवलं जनमतानामाकर्षणायैव लोके 'चुनाव-आश्वासन'मिति प्रसिद्धम् । एते नेतारः यदिदं कथयन्ति तन्नैवाचरन्ति । विजयिनो भूत्वाऽन्येषु स्वार्थपूर्तिप्रपञ्चेषु व्यापृताः स्व-

निर्वाचनक्षेत्रे न पुनरावर्तन्ते। तेषां दर्शनं दुर्लभं भवति। एतत्सर्वं पाखण्डपुराणे राजनीतिखण्डे निर्वाचनसत्यनारायणकथारूपेण ग्रथितमस्ति।" नारदेनैवं प्रबोधितो नारायणः खिन्नमना बभूव। एकान्ते तं नीत्वा नारदोऽपृच्छत्—"जानासि देव! के के सन्त्येते अभ्यर्थिनः?" तूष्णीक एव नारायणो 'न जानामीत्यभिप्रायेण शिरःकम्पं चकार। नारदः तानभ्यर्थिनो दर्शयन् प्रोवाच, "पश्यतु देव, एषः तस्करः, सोऽभिनेता, असौ नृशंसापराधो दुश्चरित्रश्च, अयं भ्रष्टाचाराभियोगात्पदच्युतो राजसेवक इत्येते तु किमपि राजनीतिकदलमाश्रयन्ते। निर्दलीयानां तु का कथा?" नारायण उवाच—"कथमेते नेतृवेषं धारयन्ति?" नारद आह—"देव! एतद्रहस्यं मया पूर्वमेवाख्यातम्। यथा दानं ग्रहीतुं भवानपि ब्राह्मणवेशं धारयति तथैवेते राजनीतिकोद्देश्यस्वार्थपूर्तये मतदानं प्राप्तुं नेतृवेषं धारयन्ति। नास्त्यत्र कोऽपि विशेषः।" नारदस्यैतद्वचनं श्रुत्वा नारायणः सन्तुष्टो बभूव।

एकदा रात्रौ विश्रामकाले तौ निश्चितवन्तौ यन्मतदानदृश्यमपि कस्मिंश्चित्तीर्थक्षेत्रे दर्शनीयम्। एतादृशानां बहूनां क्षेत्राणामाकलनं कृत्वाऽन्ततः प्रयाग-क्षेत्रं गत्वा पुण्यार्जनमिदं कर्तुं नारायणो बुद्धिं बबन्ध नारदश्चापि समर्थयामास।

प्रातःकाले तत्र गत्वा सङ्गमे मज्जनं विधाय पुण्यावहमक्षयवटमूलं परिक्रम्य यावत्तौ भारद्वाजाश्रमं गच्छतः तावत्तत्रैकं मतदानकेन्द्रं विलोक्याश्चर्यचकितौ जातौ। अथ प्रथमं नगरभ्रमणं मतदानदृश्यावलोकनञ्च करणीयं पश्चाद्भारद्वाजाश्रमान्वेषणमिति विचार्य तौ तस्मिन् मतदानकेन्द्रे गतवन्तौ। तत्र सिद्धपोठप्रभावेण मतदानकार्यं शान्तिपूर्वकं प्रचलतीत्यनुभूय तत्रतोऽपसृत्य दिवसपर्यन्तं नगरभ्रमणं चक्रतुः।

यत्रैव तयोर्दृष्टिर्निपतिता, तत्रैव हट्टाट्टालिकाः राजमार्गाः वीथयः चतुष्पथा विविधैश्चित्रैस्सुभूषिताः विचित्रैर्ध्वजैरलङ्कृताः नामाक्षरपटैर्मण्डिताः दृश्यन्ते स्म। महान् जनसम्मर्दो वरयात्रायामिव गच्छति स्म। एतादृश उत्सवो जन्मविवाहगृहप्रवेशादिष्ववसरेष्वपि न दृश्यते। नारायणस्तुतीर्थराजस्य शोभाढ्यतां निरीक्ष्य हर्षनिर्भरो जातः। सर्वेषु मतदानकेन्द्रेषु नरनारीणां सुदीर्घा पंक्तिः स्वावसरं प्रतीक्षमाणा तिष्ठति स्म। मतदातारः प्रायेणाभ्यर्थिजनानां वाहनैः गमनागमनं कुर्वन्ति स्म। एकस्मिन् स्थले

ताभ्यां दृष्टं—कोप्यभियुक्तो मतदानपेटिकामपहृत्य वेगेनापसरति। क्वचिद् विवदमानाः जनाः परस्परं प्रहरन्तः रक्षिपुरुषैः निवारिताः। क्वचिदाग्नेयास्त्रेण हतः कोऽपि मृत एव। नारदो व्याख्यातवान्—"देव! इमे राजनीतिकसाधवः। प्राचीनकालेऽपि परोपकारिणो दानशीलाः परार्थं स्वप्राणानपि तत्यजुः। एतेऽपि मतदानवीराः 'सन्तः स्वयं परहितेषु कृताभियोगाः' 'परोपकाराय सतां विभूतयः' इत्यादर्शपरम्परामनुसरन्तः प्राणान् त्यजन्ति। अन्यथा कोऽप्यन्यो विजयते, अन्य एव पराजयते, किमेभिः?"

अन्यं मतदानकेन्द्रं गत्वाऽन्तःप्रविष्टौ तौ पश्यतः—कोऽप्यवयस्क एवानधिकृतं मतदानं करोति। पृष्टे सति सोऽपि गर्वेण कथयति—"नहि एकदैव, दशाधिकवारं अत्रैव अद्यैव मया मतदानं कृतम्।" तत्र पीठासीनाधिकारिणोऽभीष्टे चिह्ने मुद्रिकां दत्वा छद्मनाम्ना नारायणेन नारदेन चापि मतदानं कृतम्। इतो गत्वाऽपरे मतदानकेन्द्रेऽन्तःप्रविष्टौ तौ पश्यतः—यदेको बहूनि मतपत्राण्यादाय स्वाभीष्टे चिह्ने मुद्रिकां ददाति। पत्रकारवेषप्रच्छन्नो नारदो यावत्तस्य छायाङ्कनं चेष्टितवान् तावत्सः तस्य छायाङ्कनयन्त्रमपहृत्य तमपि प्रहर्तुमुद्यतवान् कथंचिदुत्तूलुत्य नारदः स्वप्राणान् ररक्ष। अनेन वृत्तेन भीतौ तौ त्वरितमेव योगमायया सङ्गमक्षेत्रं प्राप्य निरापदौ बभूवतुः। एवं भारतीयस्य लोकतन्त्रस्य निर्वाचनं मतदानं दृष्ट्वाऽक्षतशरीरौ द्वावपि महात्मानौ नारायणनारदौ पुनः क्षीरसागरं प्रति प्रस्थितवन्तौ।

श्रद्धया यः शृणोत्येनां कथां प्रभुर्निमिताम्।
सर्वदानफलं लब्ध्वा स्वर्गं गच्छत्यसंशयम्॥

## वरान्वेषणम्

अस्ति प्राच्यां दिशि मगधनाम्नि जनपदे कोऽपि काकपुरं नाम ग्रामः। तत्रत्याः ध्वांक्षधूर्ता जनाः परोपजीविनो वञ्चकवृत्तिमाश्रित्य स्वजीविकोपार्जनं कुर्वन्ति। तेषां मायाविद्याप्रकारं तद्विषयकं नित्यनूतनाविष्कारं श्रुत्वा कश्चिदपि जनो हतबुद्धिर्भवति। तत्र 'चोखे' इत्यन्वर्थसंज्ञकः कोऽपि नापितः प्रतिवसति। स तु धूर्तराडिति प्रसिद्धः। तस्य पुत्रोऽपि 'मोखे' विधिना चोखेनापितस्यैव द्वितीयसंस्करणरूपेण विरचितः। कुलक्रमागते वञ्चनव्यापारे तस्याऽपूर्वा बुद्धिः स्फुरति। अस्मिन् कर्मणि तेन स्वपितुः मूर्ध्नि पदं धत्तम्। पुत्रस्य साहाय्येन चोखे प्रतिवर्षं पूर्वाधिकं धनार्जनं करोति। चोखे-मोखे इति द्वावप्यभिनयप्रवीणौ वेष-रूप-ध्वनि-संज्ञापरिवर्तनेषु कुशलौ बुद्धिचातुर्येऽप्रतिमौ च स्तः। तयोस्सिद्धान्तोऽस्ति—

> येऽपि मायाविनो धूर्ता वञ्चकाः साहसप्रियाः।
> मोदन्ते ते भुवी नूनं लक्ष्म्या स्वयमालिङ्गिताः॥

नववर्षारम्भे चैत्रमासस्य शुक्लपक्षे एकदा पुत्रः पितरमपृच्छत्—"तात, वर्षेऽस्मिन् केनोपायेन धनार्जनं करिष्यावः?" चोखे तु विहस्याब्रवीत्—"का चिन्ता? कमप्युपायं दैवः प्रदास्यत्येव।" अन्येद्युः स नापितः पुत्रमाहूय स्वचिन्तितोपायं व्याख्यातवान्—"अस्मिन् वर्षे आवाभ्यां वरान्वेषणं कर्त्तव्यम्।" वाक्यमिदं श्रुत्वैव मोखे सहसाऽवोचत्—"नास्त्यस्माकं गृहे कापि कन्या तर्हि कस्यै वरान्वेषणमिति?" चोखे सान्त्वनावचोभिः प्राह—"अलमत्युद्वेगेन। नाऽऽवां सत्याभिप्रायेण वरान्वेषणं करिष्यावः। केवलं वञ्चनप्रकारोऽयम्। मदीयेयं योजना द्विधा परिणमिष्यति—वरान्वेषणव्याजेन लग्नावधिपर्यन्तं धनिनां गृहे सुस्वादूनि भोजनान्युपभुज्यावयोर्देहपुष्टिर्भविष्यत्यपि चास्मद्गृहेषु धनवृष्टिर्भविष्यतीति।" पित्रा सङ्केतितमधिगम्य मोखेनापितो हर्षस्य परां कोटिमारुरोह। धनिनां कुलवध्वः सुमधुराणि भोजनानि निर्माय तस्मै प्रदास्यन्तीति तस्य रसना लालासिक्ता बभूव। ईदृशो वञ्चनप्रकारः तस्य स्मृतिपथे कदापि नायातः।

अथैकस्मिन् दिवसे प्रत्यूषे द्वावपि पितापुत्रौ मायाविद्यया धनार्जनं कर्तुं प्रस्थितवन्तौ। सुदीर्घं मार्गमतीत्य स्वग्रामात् सुदूरं समागत्य कमपि

ग्राममालक्ष्य तौ निश्चितवन्तौ यदत्रैव प्रथमं स्वप्रयोगविधेः परीक्षणं कर्तुं युज्यते। अतएव ग्राममुपगम्य बहिर्भागस्थिते सुरम्ये जलाशये मज्जनं विधाय चोखेनापितः श्रीसम्पन्नं ब्राह्मणवेषमकरोत्। तस्य पुत्रोऽपि मोखे सेवकवेषं विधाय तस्थौ। अभिनवकपटाभिनयं प्रवर्तयन् मोखेनापितः स्वपितुराज्ञया तत्र स्नानाय समागतं कमपि ग्रामवासिनमाहूय निवेदितवान्—"आर्य, अयं मे स्वामी स्वकन्यायै सुयोग्यं वरमन्विष्यन्नितस्ततो भ्रमति। अस्मिन्नेव प्रसङ्गे ग्रामोऽयं प्राप्तः। यद्यत्र कोऽपि कुलीनः सुप्रतिष्ठितो लक्ष्मीसम्पन्नो ब्राह्मणश्रेष्ठः प्रतिवसति, यस्य गृहं गत्वाऽऽवयोर्वराकाङ्क्षा विद्याविनयसम्पन्नं प्रियदर्शनं कुमारं प्राप्य जले शर्करेव विलीनीभूय मधुरं सम्बन्धं स्थापयेत्तर्हि कृपया विज्ञापयतु माम्, पुण्यञ्च ममापि गृह्णातु भवान्।" एतच्छ्रुत्वा सोऽप्याह—"महत्सौभाग्यमिदं यद्भवान् मां पृच्छति। आवेदयामि भवन्तम्। श्रूयताम्—अस्त्येवास्य ग्रामस्यालङ्कारभूतः सुकुलः शुक्लवंशः। तस्मिन् विराजते लक्ष्मीसरस्वत्योरेकाधिष्ठानभूतो यशःपूतो महिमामण्डितः परमपण्डितः श्रीमच्छरच्चन्द्रशुक्लो नाम विप्रवरः। तस्य पुत्रेषु ज्येष्ठो विद्यानिधिशुक्लो निवेशार्थी वर्तते। एतादृशः कुमारो दुर्लभ एव। सर्वथा योग्योऽयं सम्बन्धो भविष्यति। यदि भवतोऽनुमतिः स्यात् तस्य गृहं प्रति नयामि भवन्तौ।" सेवकवेषप्रच्छन्नो मोखे तु ब्राह्मणवेषधारिणः स्वपितुरन्तिकं गत्वा सर्वमाख्यातवान्। श्रुत्वा प्रीतमुखः स समुत्थितः तं जनमाहूय, तस्मै साधुवादं विज्ञाप्य तेन सह शुक्लमहानुभावस्य गृहं प्रति प्रतस्थे। मोखे अपि सेवकरीतिना तमनुससार।

कश्चिद् वरान्वेषी सद्ब्राह्मणः समायातो द्वारि वर्तते इति श्रुत्वा गृहाभ्यन्तरवर्ती शुक्लमहोदयः प्रसन्नमना बहिर्निर्गत्य स्वागतवचनं व्याहृत्य स्वगृहस्यैके ललिते प्रकोष्ठे तौ नीतवान्। स्वल्पाहारानयनाय कमपि सेवकं समादिष्टवान्। सर्वेष्वासीनेषु ब्राह्मणवेषेण विराजमानश्चोखेनापितः सप्रश्रयमुवाच—"महन्मे खलु पुण्यमिदं यदत्र दैवेन प्रापितोऽस्मि। भवद्दर्शनमात्रेणैव स्वमनोरथसिद्धिं प्रत्याश्वस्तोऽस्मि। भवदीया महती प्रतिष्ठा मम श्रवणगोचरतां गता विद्यते। सा तु सार्थकेति दृष्टवाऽनुभूयते इदानीम्। जनोऽयं द्विजपुरवासिनः श्रीमद्भागवतमिश्रस्यानुजो यस्य कीर्तिकौमुदी धरां धवलयति। तस्यैका कन्या विवाहयोग्येदानीं संवृत्ता। जानात्येव भवान् कन्या नाम महद्दुःखम्। केनापि

सूक्तमेव—

पुत्रीति जाता महतीह चिन्ता,
कस्मै प्रदेयेति महान् वितर्कः।
दत्ता सुखं प्राप्स्यति वा न वेति,
कन्यापितृत्वं खलु नाम कष्टम्॥

कन्या कं कं देशं न दर्शयति। असम्बद्धैरपि जनैः सह सम्भाषणं कारयति। यथाऽऽर्त्ताऽऽतुरो येन केनापि सूचितं यं कमपि वैद्यमनुधावति तथैव कन्यायाः पिताऽपि जनैर्विदितवृत्तान्तो यत्र तत्र वरान्वेषणं कुर्वन्नटति।" शुक्लमहोदयः तस्य वचनमाहृत्य प्रोवाच—"धन्योऽस्मि। भवतः चरणरजोभिः मे कुटीरः पवित्रीकृतः। न जाने कस्य जन्मनः पुण्येन भवद्दर्शनं जातम्। सतां सद्भिः संगः कथमपि हि पुण्येन भवतोति भवभूतिना महाकविना समोचोनमुक्तम्। श्रीमद्भागवतमिश्रं को न जानाति ? तस्य यशःकथाऽमृतनिर्झरिणीव कर्णविवरं प्रविश्य मानसमुल्लासयति। तद्गृहं धन्यं यत्र तस्य कन्या गमिष्यति। पृच्छाम्यहं— बालकबालिकाः कस्य गृहे न सन्ति ? अस्मिन् को विशेषः ? भवदोया कन्या तु मदोयैव। इदमेव समधीत्वम्। यथा नदी कूलद्वयं तथैव कन्यापि कुलद्वयं पवित्रोकरोति। इदं मे महत् पुण्यफलं यदि दैवानुग्रहेणायं सम्बन्धो भविष्यति। तव कन्या मे गृहे लक्ष्मीरूपेण समागमिष्यतीति महान्मोदो मनसि मम जातः।" इत्युक्त्वा शुक्लमहोदयः परमप्रीत्या मिश्रमहोदयस्य ( कपटवेषेण स्थितस्य चोखेनापितस्य ) हस्तौ स्वहस्ताभ्यां समादधौ।

एतस्मिन्नन्तरे सेवकः स्वल्पाहारं समादायोपस्थितो बभूव। शुक्लमहोदयः सादरं निवेदितवान्। कापटिको मिश्रमहोदयः कन्यापितृत्वमवलम्ब्य प्रथमन्तु किमपि ग्रहणं प्रत्यनिच्छां व्यक्तवान् परन्तु शुक्लमहोदयस्य निर्बन्धेन विवशमनाः सविनयं तत्सर्वं स्वीकृतवान्। सेवकवेषधारी मोखेनापितस्तु क्षुत्क्षामकण्ठः त्वरितमेव स्वल्पाहारे प्रणयं चकार। स्वल्पाहारे सम्पन्ने जाते यदा मोखे स्वपितुः ब्राह्मणवेषधारिणो मिश्रमहोदयस्य चरणसेवामारब्धवान् तदा शुक्लमहानुभावस्य सेवकः तं निषिध्य स्वकं तस्मिन् कर्मणि नियोज्य तमपि विश्रमितुं नुनोद। द्वावपि कापटिकौ मार्गश्रमवशान्निद्रापरौ बभूवतुः।

शुक्लमहोदयस्तु गृहे गत्वा स्वभार्यां तयोरागमनप्रयोजनमाख्याय सुस्वादूनि पक्वान्नानि निर्मातुं समादिदेश। तच्छ्रुत्वा भार्या तं निवेदितवती—"आर्यपुत्र, पश्य मे महती खलु पुत्रवधूदर्शनोत्कण्ठा वर्तते। पुत्रोऽपीदानीं सर्वथा विवाहयोग्यः संजातोऽध्ययनं समाप्य महाविद्यालये प्राध्यापकपदमलङ्करोति। यदि मिश्रमहोदयोऽस्माकं समकक्षः तर्हि सम्बन्धः स्थिरः कर्तव्यः। साम्प्रतं विलम्बस्य किमपि कारणं न दृश्यते। कन्याविषये योग्यतानिर्वाहपरीक्षणं विधाय सन्तुष्टः सन् लग्नपत्रिका लेखनीया। शुभकर्मणि दीर्घसूत्रता नोचिता।" इत्थं विद्यानिधिपितरं प्रबोध्य सा भोजननिर्माणे व्यापृता बभूव।

यथाकालं प्रबोधितौ तौ कापटिकौ सुस्वादूनि पक्वान्नान्युपभुज्याकण्ठतृप्तौ जातौ। भोजनानन्तरे ताम्बूलगुटिकां समर्पयन् शुक्लमहोदयः सद्गृहस्थधर्मानुरूपम्—"आतिथ्ये यदि कापि त्रुटिर्भवेत्तत्क्षम्यतामिति" विनिवेद्य तूष्णीको जातः। मिश्रमहोदयः तस्यातिथिसपर्याप्रकारं प्रशंसयन् भूरिशो विनयमुपदर्शितवान्। तस्मिन्नेवावसरे सेवकवेषधारी तस्य पुत्रो मोखेनापितः कुड्मलाकृतिमञ्जलिं बद्ध्वा शुक्लमहोदयं निवेदितवान्—"स्वामी भवन्तं प्राप्य सुप्रीतो वर्तते। स हृदयेनाभिलषति सम्बन्धमत्रैव विधातुम्। तथापि यदि भवान् नान्यथा मन्येत स्वामी तावत् कुमारं द्रष्टुं वाञ्छति।" शुक्लमहोदयः प्रीतिप्रफुल्लितविलोचनो विहस्यावादीत्—"नहि, नहि, कथमन्यथा मन्ये। सर्वथोचितं दुर्लभदर्शनं वरनिरूपणम्। अहमपि कन्यां द्रष्टुमिच्छामि किन्तु प्रथमं भवान् कुमारं पश्यतु। सः तु महेशपुरमहाविद्यालये संस्कृतविभागे प्राध्यापको वर्तते। विद्यानिधिशुक्ल इति तस्याभिख्याक्षराणि। सः छात्रावाससंरक्षकपदमपि धारयति। तत्र गत्वा प्रतिनिवृत्य यदा भवानागमिष्यति तदाऽहमपि कन्यादर्शनं प्रति निश्चयं करिष्यामि। व्यवहारपक्षं समालोच्य यदा मिश्रमहोदयेन यौतुकं प्रति किमपि सङ्केतितं, शुक्लमहोदयः प्राह—"यौतुकस्य का कथा? लोकमर्यादां दृष्टिगतां कृत्वा भवान् यदपि पत्रं-पुष्पं प्रयच्छति तत्सर्वमहं स्वीकरिष्यामि।

अथ सविनयं शुक्लमहोदयमापृच्छ्य तस्य सेवकाय दशरुप्यकाणि प्रदाय कापटिकमिश्रमहोदयः गन्तुं प्रचक्रमे। शुक्लमहोदयोऽपि सेवकवेषधारिणे तस्य पुत्राय विंशतिरुप्यकाणि दत्वा तस्य हस्ते चैकमभिज्ञानपत्रं

समर्पितवान् । तं गृहीत्वा द्वावपि कापटिकौ सायंवेलायां यथाकथञ्चिन्महेशपुरं प्राप्तौ । तत्र महाविद्यालये नातिश्रमेण प्राध्यापको विद्यानिधिशुक्लो मिलितः । स्वपितुरभिज्ञानपत्रेण सर्वं विज्ञाय तयोर्महदातिथ्यमकरोत् ।

कियन्मात्रं विश्रम्य कापटिकमिश्रमहोदयस्याज्ञया सेवकवेषधारी पाककर्मनिपुणः तस्य पुत्रो महानसे प्रविश्य रन्धनं कृतवान् । भोजनावसरे तेन विद्यानिधिशुक्लस्य पायसे मधुरं विषं मिश्रितम् । परिसमाप्याहारं विद्यानिधिः विष्टरे समुपविष्टो मिश्रमहोदयेन सह सम्भाषणं कुर्वन्नेव विषस्य प्रभावेण शनैश्शनैः तथा मोहमुपगतः यथा तेन स्वाभाविकी निद्रा सम्प्राप्ता । विद्यानिधिशुक्लेऽचेतने जाते सति, द्वावपि पितापुत्रौ तत्र सर्वत्रान्विष्य तस्य सर्वं द्रव्यादिकं धनं बहुमूल्यानि वस्त्राण्यप्यादाय निर्गतवन्तौ । तस्मिन्वर्षे ताभ्यामनेनैव प्रकारेण बहुधा वरान्वेषण कृतम् ।

श्रद्धया यः शृणोत्येनां कल्पितां प्रभुणा कथाम् ।
स नूनं समवाप्नोति स्वकन्यायै वरं वरम् ॥
विवाहे मङ्गले कार्ये स्थाने धूर्तसमाकुले ।
वञ्चकोत्था भवेद् बाधा न कदापि पठन्निमाम् ॥

## दूरभाषः

अस्ति वाराणस्यां धनिनामेका कालवनी[1] रवीन्द्रपुरी नाम्नी, यत्र श्रेष्ठिश्रेष्ठाश्चिकित्सकप्रवरा अभियन्तारोऽधिकारिणः प्राध्यापकाश्च निवसन्ति। विस्तारशोभासम्पन्नेयं कालवनी प्रशस्तैः राजपथैस्सुविभक्ता गृहवाटिकाभिस्तिलकिता हर्म्यैरलङ्कृता च वर्तते। तत्रैकस्मिन् दिवसे सायंकाले कस्मिंश्चित् क्रीडोद्याने द्वौ बालकौ परस्परं क्रीडतः स्म। मित्रत्वमापन्नौ द्वावपि तावेकस्मिन्विद्यालये सहपाठिनावपि स्तः। तौ सहैव विद्यालयं गच्छत आयातः क्रीडतश्च। तयोरेकोऽभियन्तृपुत्रोऽपरश्च प्राध्यापकपुत्रः। यद्यपि प्राध्यापकमहोदयोऽपि स्वकीयदीर्घकालिकसेवया भृशं धनसञ्चयमकरोत् किंत्वभियन्तृमहोदयापेक्षया तस्य लक्ष्मीस्तन्वीतराऽस्ति। अभियन्तृमहोदयस्य गृहं सर्वाधुनिकभौतिकसुखसुविधासम्पन्नं वर्तते। प्राध्यापकपुत्रः स्वपितृप्रभावेण विनयसम्पन्नस्सरलवृत्तिश्चास्ति। अभियन्तृपुत्रोऽपि तादृश एव किन्तु स्वपितृपदाधिकारस्यापि चैश्वर्यस्य गर्वो यदाकदा तस्य वचनात् प्रकटितो भवति।

तत्र क्रीडायां तयोः कोऽपि विवादो जातः। शनैश्शनैस्तस्य रूपं विकृतमासीत्। यद्यपि तौ प्रगाढमित्रे आस्तां तथापि बालकानां स्वभावो विचित्रो भवति। विवदताऽभियन्तृपुत्रेण सोपहासमुक्तम्—रे! गच्छ-गच्छ, तव गृहे दूरभाषोऽपि नास्ति। तव पिता प्रतिदिनमेवागत्य मम पितरं याचते—"दूरभाषं प्रयोक्तुमिच्छामि।" इदमाकर्ण्य प्राध्यापकपुत्रो विषण्णवदनो निजगृहमगात्। तत्र गत्वा खेदालस इव तूष्णीक एव विष्टरे समुपविष्टः। 'सदैवायं क्रीडोद्यानात् प्रफुल्लवदनो समायाति परन्त्वद्य किं जातं यदयं खिन्नो दृश्यत' इति मनसि कृत्वा तस्य माता तमुपागत्यापृच्छत्—"वत्स, कथं खिन्नमना आलक्ष्यसे? किं तेऽप्रियं जातम्?" स तु बाष्पावरुद्धकण्ठेन सर्वमावेदितवान्। तच्छ्रुत्वा सा तमाश्वासयन्ती प्रोवाच—"वत्स, खेदं मा भज। अध्यापकपुत्रोऽसि। तव पितुराजीविका विशुद्धैव। तत्र नाभियन्तृवदतिरिक्तमुपार्जनमस्ति। तथापि प्रयतामहे स्वगृहं दूरभाषसंयुक्तं कारयितुम्। गच्छेदानीं प्रहृष्टमनाः स्वसायंकालिकं पठननियोगमशून्यं कुरु।"

---

१. 'कॉलोनी' इति।

तस्मिन्नेव दिने सा रात्रिभोजनानन्तरं स्वपतिमिदं सर्वमाचचक्षे। तदाकर्ण्य प्राध्यापकमहोदयो विहस्य प्रोवाच–"कृतानि पुत्रैरकृतानि पूर्वैः। मया पूर्वंचिन्तितं कार्यमधुना पुत्रेण कारितमेव। यदाऽहमभियन्तृगृहं दूरभाषं प्रयोक्तुं गच्छामि तदा मे मनसः कस्मिंश्चित्कोणे सुप्तः स्वाभिमान उन्निद्रो भवत्येव। किन्तु मया यत्नपूर्वकं मनस्यवधारितमासीद् यदनेन विनाऽपि कार्यं प्रचलत्येव। यदाकदाऽस्य प्रयोगसौविध्यमभियन्ता ददात्येव। किन्त्विदानीमिमं वृत्तान्तं श्रुत्वाऽसंशयं स्वगृहं दूरभाषसंयुक्तं कर्तुमुत्सहे।"

शयनं गतस्य प्राध्यापकस्य मनसि दूरभाषयन्त्रस्य महती खलूपयोगिता समायाता। 'स्वगृहे स्थितः कोऽपि जनो दूरभाषयन्त्रस्य साहाय्येन स्वाभीष्टैर्दूरवर्तिभिस्समीपवर्तिभिर्वा जनैस्सह सम्भाषणं कर्तुं प्रभवति। सम्बन्धस्थापने तस्य रक्षणेऽपि चायं दूरभाषो रामबाण इव शक्तः। स्थलीयं, जलीयं, नभोमार्गीयं यानं कदाऽऽगमिष्यति कदा वा गमिष्यति, तत्रारक्षणं भवितुं शक्यते न वेति सर्वं दूरभाषद्वाराऽत्यल्पसमय एव ज्ञातुं शक्यम्। स्वकार्यालयं प्रति या काऽपि सूचना दूरभाषेण त्वरितमेव प्रेष्या भवति। अल्पसमये राजकीयानां सेवानामधिकारिणाञ्च यथा चिकित्साग्निशमनरक्षिबलादीनां साहाय्यं क्षिप्रतया दूरभाषमाध्यमेन प्राप्तुं सम्भवम्। एतानि तु कियन्मात्राण्युदाहरणानि सन्ति। वस्तुतो वर्तमाने युगे दूरभाषस्योपयोगिता स्वयंसिद्धैव। अपि च दूरभाषयन्त्रबलेन कोऽपि जनः स्वाभीष्टं महदपि कार्यं साधयितुं समर्थो भवति। न केवलमिदमेवापि तु दूरभाषयन्त्रं स्वधारकाय स्वामिने उच्चवर्गीये समाजे प्रतिष्ठामपि प्रददाति। हस्तस्य मणिबन्धे यथा घटिकायन्त्रं जनस्य शोभायै भवति तथैव दूरभाषयन्त्रमपि गृहस्य शोभायै भवति। राजकीयकार्यालयेषु, राजनेतॄणां गृहेषु, वणिग्जनानामापणेष्वन्येष्वपि संस्थानेषु दूरभाषयन्त्रमनिवार्यतो महदुपयोगि वर्तते। ममाध्यापकस्यापि कृतेऽस्य यन्त्रस्योपयोगिता वर्तत एव। अहो महत्त्वं दूरभाषस्य!' इति विचार्य सः सुप्तो जातः। स्वप्नेऽपि तेन बारम्बारं दूरभाषघण्टिकाध्वनिः श्रुतः।

अपरेद्युः तेन विश्वविद्यालयतो दिनद्वयस्याकस्मिकोऽवकाशो गृहीतः। दूरभाष-कार्यालयं गत्वाऽऽवेदनपत्रसम्पूरणादिकं सर्वमौपचारिकं विधिं निर्वाह्य यथानिर्दिष्टं शुल्कद्रव्यमपि तत्र कोषे निक्षिप्तम्। एतत्कृत्वाऽन्ते

दूरभाषप्रबन्धकं ददर्श। स्वपरिचयं विज्ञाप्य प्रयोजनमाख्यातवान्। द्वितीये दिवसे यथावसरं सः प्रबन्धकमहोदयं पुनरपि ददर्श। सः सम्बद्धलिपिकमाहूतवान्। लिपिक आगत्य तं तत्सम्बन्धिनीं पत्रावलीं प्रादर्शयत्। तां दृष्ट्वा तस्यावेदनक्रमाङ्कं निर्दिशन् सोऽब्रवीत्—"प्राध्यापकमहोदय, भवद्दूरभाषसंयोजनावसरः आगामिनि पञ्चमे वर्षे आगमिष्यति। यथाकालमस्मात्कार्यालयात् सूचना भवद्भिः प्राप्स्यते" इति।

अथ किं करोमि, कथं त्वरा भवेत्, कोऽप्युपायः स्यान्न वेति तर्कयन् सः प्रबन्धकस्य कक्षान्निर्गत्य सोपानमार्गतोऽवतरन्नासीत् तदैव तत्रस्थ एको लिपिको मिलितो यः प्राध्यापकमहोदयस्य पुराछात्र आसीत्। अत्यादरेण प्रणम्य तेनागमनकारणं पृष्टम्। तस्मिन्नेवं पृष्टे सति प्राध्यापकः परमप्रीतो भूत्वा सर्वमाख्यातवान्। ततः सः लिपिकः स्वयं तस्य नवदूरभाषसंयोजनसम्बन्धिनीं पत्रावलीमवलोक्य, "मयि स्थितेऽप्यत्र भवत्कार्यं कथं न भविष्यतीति प्राध्यापकमहोदयस्य व्यग्रतां दूरीकृत्य पुनश्चाब्रवीत्—दूरभाषाभिलाषिणो जना अत्रागत्य सहस्राधिकरूप्यकाण्यपि ददत्युत्कोचम्। भवतोऽभ्यर्थनापत्रं तु सामान्यकोटिकमस्ति किन्तु विशिष्टकोटिककरणाय सन्त्युपायाः। तत्र प्रथमः केनापि विशिष्टातिविशिष्टजनेन[1] संस्तुतिः। द्वितीयस्तु किमपि विषयमधिकृत्याखिलभारतीयाधिवेशनायोजनम्। अयमुपायः सुकरः। भवानावेदयत्वत्र यन्नवशिक्षानीतिमधिकृत्य मयाऽखिलभारतीयविचारगोष्ठी समायोजिता। तस्या अधिवेशनमागामिनि मासे भविष्यति। एतन्निमित्तं दूरभाषस्यास्थायिसंयोजनं दीयतामिति। अत्रेदमपि कार्यम्—गोष्ठीविषयकमेकं परिपत्रमपि च गोष्ठीशीर्षकेण स्वनामपदाधिकाराभिसूचकपत्रं मुद्राप्याभ्यर्थनापत्रेण सह योज्यम्। शेषं सर्वमहं करिष्यामि। अस्थायिसंयोजने प्राप्ते सति स्थायि दूरभाषसंयोजनमपि मम प्रयत्नेन भविष्यति।" इत्थं स्वछात्रलिपिकसाहाय्येन यथानिर्दिष्टं कृत्वाऽचिरेण सः प्राध्यापकोऽस्थायिदूरभाषसंयोजनं प्राप्तवान्। सकुटुम्बः प्राध्यापकः प्रसन्नो बभूव।

दूरभाषसंयोजनस्य प्रथमदिन एव तस्योद्घाटनमिति कृत्वा कालवतीनिवासिभिः प्रायेण शताधिकैरपि जनैर्दूरभाषयन्त्रेण स्वाभीष्टसन्देशादानप्रदानं कृतम्। तदनन्तरं प्रतिदिनमेव दशाधिकैः जनैरागत्य, 'श्रीमन्,

१. 'V. I. P.' इति।

तव दूरभाषयन्त्रं किञ्चित्प्रयोक्तुमिच्छाम' इत्युक्तं श्रावं श्रावं शिरोवेदनाऽनुदिनं वर्धत एव।

एकदा प्राध्यापकमहोदयो विश्वविद्यालयादागत्य स्वकक्षे उपविष्ट एवासीत् ततो दूरभाषयन्त्रस्य घण्टिका ध्वनिमकरोत्। सः तस्य प्रापकं[1] समुत्थाप्य यदा कर्णे करोति तथा कांचिद् भूमिकां विनैव परतो गालिदानस्याविरतधारा तस्य कर्णविवरे प्रविष्टा। प्राध्यापकमहोदयेन–"श्रूयतां श्रूयतां, कथं कस्मै वा गालिदानमिति" उच्चारितं किन्त्व-परपक्षेऽस्य कोऽपि प्रभावो नासीत्। अन्ततः खिन्नो भूत्वा प्रापकं यन्त्रोपरि निक्षिप्तवान्। एवमेव प्रायशः प्रतिदिनमेव कस्यचिदसम्बद्धा भर्त्सना अपशब्दा अन्या अपि कुवार्ता दूरभाषमाध्यमेन श्रवणपथमायान्ति। कदाचिद् दूरभाषघण्टिकाध्वनिं श्रुत्वा प्रापके कर्णे दत्ते सति, 'अहो माथुर, अहं बैजनाथो ब्रवीमि'; 'अहो मुखोपाध्याय'; 'अयि प्रियतमे,' 'भोः, काशीविश्वनाथरेलयानस्य प्रस्थानकालं ब्रूहि'; 'मुकुन्द, अद्य स्वर्णस्य किं मूल्यम् ?'; रे भार्गवकुलकलंक, मम ऋणं कदा दास्यसि ?'; 'अहो कुतः, आयकरकार्यालयतः?' इत्यादीनि वचनानि भूयोभूयः श्रुत्वा खिन्नमनसा "त्रुटिपूर्णाः सङ्केताङ्काः" इत्यभिधाय सम्बन्धविच्छेदस्य परिपाटी एव प्रचलिता।

एकस्मिन् दिनेऽतिमहत्त्वपूर्णः सन्देशः प्राध्यापकमहोदयेन प्रेषणीयः आसीत्। यदा सोऽभीष्टं सङ्केताङ्कं समायोज्य प्रापकं कर्णोपरि कृतवान् तदा तत्र नासीत् कश्चिद्ध्वनिः। तद्यन्त्रं निष्क्रियं[2] जातमिति विज्ञाय सोऽतिक्रुद्धोऽभवत्। दूरभाषकार्यालयं गत्वा बाधोत्सारणाय लिखितरूपेणावेदितवान्। शिष्यलिपिकप्रयत्नेनापि दिनद्वयान्तरमेव यान्त्रिकैः तद्यन्त्रं क्रियाशीलं कृतम्। यदाकदा यन्त्रमिदं स्वयमेव निष्क्रियं सक्रियं भवति।

एकदा निशीथे प्रध्यापकमहोदयो निद्रायां निमग्न आसीत्; दूरभाषयन्त्रस्य घण्टिका ध्वनिं कर्तुमारेभे। तेन ध्वनिना तस्य निद्राभङ्गो न जातः किन्तु ध्वनेस्सातत्येन तस्य भार्या विगतनिद्रा भूत्वा, तमुपसर्प्य

१. 'रिसीवर' इति।
२. 'डेड' इति।

यन्त्रप्रापकं कर्णेऽकरोत् । परतः समागतः सुमधुरः ध्वनिस्तस्याः कर्णविवरं प्राविशत् । स्वयं निश्शब्दा सती सा श्रुतवती—"प्रियतम, भवान् ममेव निशीथेऽपि जागर्ति । तव विरहो मां भृशं पीडयति । दिने तु विश्वविद्यालये भवतां रूपमाधुर्यं निपीय, भवता सह सम्भाषणं कृत्वा, यदाकदा चलचित्रमप्यवलोक्य, जलपानगृहेषु गोष्ठीमाहूय येन केन प्रकारेण स्वहृदयं तोषयामि किन्तु रात्रौ यदैकाकिनी भवामि, निद्राऽपि न सङ्गच्छते । एकोऽपि क्षणो युगमिव प्रतीयते । कथं व्यपनयामि कालम् ? इदानीं दुःसहोऽयं वियोगः"—एतन्मात्रमेव श्रुत्वा प्राध्यापकभार्या सपत्नीशङ्काकुला सत्वरं पतिं प्राबोधयत् । दूरभाषप्रापकं तस्य हस्ते निक्षिप्य बाणविद्धा हरिणीव, त्रस्तेव, खिन्नेव, क्रुद्धेव तस्मिन् दृष्टिक्षेपमकरोत् । जागृतः सोऽपि यन्त्रप्रापकं गृहीत्वा यदा कर्णे करोति तदा नारीस्वरं श्रुत्वाऽपृच्छत्—"का तत्रभवती ? कमालपति ?" साऽपि यन्त्रत्रुटिवशान्मया पुरुषेणाविज्ञातेन सह प्रेमालापः कृत इति विज्ञायानुत्तरपूर्वकं सहसैव सम्बन्धविच्छेदमकरोत् । दूरभाषकौतुकमनुभूय दम्पती हास्यनिर्भरौ जातौ ।

एवं दूरभाषस्य कटुमधुरानुभवैः सह प्राध्यापककुटुम्बः मासाधिकं कालं व्यतीतवान् । एकस्मिन्दिने दूरभाषयन्त्रप्रयोगशुल्कपत्र[1]मागतम् । तत्र दूरभाषेण सन्देशप्रेषणशुल्करूपेण चतुस्सहस्ररूप्यकं देयमिति मुद्रितं दृष्ट्वा सर्वे विस्मिता आसन् । दूरभाषकार्यालयं गत्वा पृष्टे सति तत्रोत्तरं प्राप्तम्—"काचित् संगणकत्रुटिरपि सम्भावनीया । किन्त्विदानीं तद्धनं तु देयमेव । अन्यथा दूरभाषस्य तन्तुविच्छेदनं भविष्यति ।" तन्तुविच्छेदनमेव स्वीकर्तव्यं न तु शुल्कस्य महद्राशिनिक्षेप इति सम्प्रधार्य प्राध्यापकमहोदयः ततः प्रत्यावर्तत ।

दूरभाषकथां श्रुत्वाऽऽकाशवाणीप्रसादतः ।
दूरादपि समास्वाद्य कस्य मोदो न जायते ॥
दूरभाषेण यत्कष्टं दूरभाषं विना तु यत् ।
कथाश्रवणमात्रेण तत्सर्वं नोपपद्यते ॥

---

१. 'बिल' इति ।

## शिखापण्डितः

अस्ति विन्ध्याटवीमध्ये हिरण्यबाहुनदस्य दक्षिणे कूले पर्वतपुरं नाम ग्रामः। तस्मिन् ग्रामे ब्राह्मणकुलभूषणः श्रीमद्धर्मध्वजशास्त्रिमहोदयो निवसति स्म। वाग्देवतावतारस्य पण्डितप्रवरस्य तस्य शास्त्रिवर्यस्य पुत्र ईदृशो देवानां प्रियो भविष्यतीति को जानाति स्म! विचित्रं दैवम्। गहना कर्मणो गतिः। अयमेव धर्मध्वजशास्त्रिवर्यो यः सदैव डिण्डिमघोषेण घुष्यति स्म—

एकोऽहं पण्डितो विद्वान् द्वितीयस्तु ममानुजः।
अर्धे तिष्ठति मे भार्या शेषा दर्दुरवायसाः॥

का कथा शास्त्रिणः पाण्डित्यस्य! यस्य नामश्रवणमात्रेण सभामध्याच्छास्त्रार्थमहारथिनः पलायन्ते स्म तस्यैव पुत्रस्य मुग्धवचनं श्रोतुं तमुपहसितुञ्च जनास्समवेता भवन्ति। मणिखनौ कुतः पाषाणखण्डः? शशिनि कलंक इव, इक्षुमूले शराङ्कुर इव सः तस्य गृहेऽजायत। गुरुणा तस्याभिख्यायां कान्यक्षराणि समायोजितानीति नाहं वेद्मि किन्तु लोके सः स्वशिखावैपुल्येन 'शिखापण्डित' इति प्रसिद्धिमवाप।

महता कालेन पुत्राय स्पृहावती शास्त्रिवर्यस्य भार्या पुत्ररत्नमसूतेति शुभवार्तां समाकर्ण्य सर्वे हर्षनिर्भरा जाताः। मात्रा पालितः पित्रा लालितः सः शनैश्शनैस्समवर्धत। पांसुक्रीडापेशलाय तस्मै विद्याध्ययनापेक्षया गोचारणमधिकतरं रोचते स्म। पितुः शिक्षावचनं प्रति तेन मनागपि कर्णौ न दत्तः। अक्षरैस्सह परिचयोऽपि न कृतः किन्तु निरक्षरस्यापि तस्य मेधाऽकुण्ठिताऽऽसीत्। स्वपितृमुखाद् बहुधा विविधग्रन्थपाठावृत्तिं श्रावं श्रावं सोऽनेकान् ग्रन्थान् जिह्वाग्रानकरोत्। पाषाणेऽपि रज्जुघर्षणवशाच्चिह्नं जायते। एवमेव स लघुसिद्धान्तकौमुदीं, सत्यनारायणव्रतकथां, दुर्गासप्तशतीं तथान्यांश्च बहून् ग्रन्थान् कण्ठस्थानकरोत्।

प्राप्ते वयसि शास्त्रिमहोदयः तस्य विवाहं सुदूरवर्तिनि कस्मिंश्चिद् ग्रामे प्रतिष्ठितब्राह्मणकुलेऽकरोत्। एकदा स वध्वानयनाय स्वपित्रा प्रेषितः श्वसुरालयं गतवान्। तत्रोचितं व्यवहारबोधनं तु मात्रा सम्यगुपदिष्टमासीत्। जामाता श्वसुरगृहे कथमुपविशेत् कथं स्वपेत् कथ-

मालपेदित्यादिभिरारभ्य वाणीषु माधुर्यं भोजने संयम इति सर्वमवधार्य गृहदेवतावन्दनं विधाय पित्रोश्चरणरजांसि शिरसि कृत्वा वरवेषं विधाय स्वगृहान्निर्ययौ। व्रजतस्तस्य काऽप्यभिख्यासीत्। शिरसि श्वेतोष्णीषं, ललाटे चन्दनं, नेत्रयोरञ्जनं, कर्णयोर्मणिकुण्डले, ग्रीवायां हारावलिः स्कन्धदेशेंऽशुकोत्तरीयं, कनकवलयमेकस्मिन् हस्तेऽपरे समयसूचकं घटिका-यन्त्रं, वामकरे श्यामच्छत्रं दक्षिणकरे चोपायनमिष्ठान्नमञ्जूषाऽऽसीत्। पीतकौशेयकञ्चुकं धारयित्वा श्वेतधौताऽधोवस्त्रं कटिपिनद्धमासीत्। नगरात् क्रीतमुपानद्युगलं तस्य चरणयोः स्थानं प्राप्य हर्षेणेव 'चूँ-चूँ' इति गमनध्वनिं करोति स्म। संकुलितवेषं स्वपुत्रमनुसरन्ती तस्य जननी ग्रामाद्बहिः जलाशयपर्यन्तमागत्य तस्य मार्गक्षेमाय त्रोटकं विधाय प्रतिनिवृत्ता। श्वसुरालयमहं गच्छामीति द्विगुणितोत्साहेनोत्फुल्लनेत्रः स मण्डूकप्लुतिगत्या मार्गं लङ्घयन् दिवसावसानात्पूर्वमेव श्वसुरगृहे उप-स्थितो बभूव। जामाता आगत इति महोत्सवं मन्यमानाः सर्वे जना अतिथिसपर्यां यथाविधि सम्पादयामासुः। तत्र ग्रामे जामात्रागमनवार्तेयं शुष्कारण्येऽग्निरिव सर्वत्र व्याप्ता बभूव। काश्चन ग्रामवध्वो जामातारं द्रष्टुमभ्यागतवत्यः।

तस्यामेव सन्ध्यायां तस्मिन् ग्रामे ग्रामपतेः कन्यायाः परिणयाय वरयात्रा समायाताऽऽसीत्। द्वारपूजानन्तरं शिष्टाचारसभाया आयोजनं भविष्यतीति पूर्वनिर्धारितमेव। तस्य ग्रामपतेः पुरोहिताचार्यस्तु शिखा-पण्डितस्य श्वसुर एवासीत्। वरपक्षतः कोऽपि सुप्रतिष्ठितः पण्डितः समागतोऽस्तीति विज्ञाय ग्रामपतेः पुरोहितस्य संज्ञा लुप्तेव जाता। किन्त्विदानीं स्वजामात्रागमनं समाकर्ण्य कण्ठगतान् प्रणान् सम्प्रधार्य त्वरितमेव स्वगृहमागतवान्। जामातारं कण्ठेनाश्लिष्य दैवस्य कृतज्ञतां ज्ञापयामास यतो हि दैवेनाद्य स आपत्पयोधौ निमग्नोऽपि जामातृप्रेषणेन समुद्धृतः। जामातरि सत्यागत इदानीं शिष्टाचारसभामध्ये शास्त्रार्थात् किं भयम्? वरयात्रया सहागतः पण्डितो यो वा को वा भवेत्? का शक्तिस्तस्य पण्डितमूर्धन्यधर्मध्वजशास्त्रिपुत्रस्य पुरस्स्थातुम्? शिखा-पण्डितेन 'किमिदमिति पृष्टे सति सोऽपि संक्षेपेण तत्सर्वमावेदयत्। तच्छ्रुत्वा तु शिखापण्डितः स्वशिरसि हस्तौ निक्षिप्योच्छ्वासं मुमोच। अभूच्च तस्य मनसि—"सर्वथा विपत्पाशे पतितोऽस्मि। श्वसुरालये

भूताऽवमानना मरणादप्यतिरिच्यते। यदि शास्त्रार्थे पराजितः स्याम् तर्हि मे पितृचरणानां गौरवमपि धूमिलं स्यात्। हे भाग्यदेवते, प्रसीद, सर्वथा मां रक्ष।" इदानीं तेन विद्याध्ययनस्य महत्त्वं शास्त्रज्ञानस्य गौरवञ्चानुभूतम्।

यथासमयं शिखापण्डितः स्वश्वसुरेण सह शिष्टाचारसभायां शास्त्रार्थ-परिषद्युपस्थितोऽभूत्। तत्र श्वसुरेण तस्य महिमा ख्यापितः—"को न जानाति श्रीमन्तं धर्मध्वजशास्त्रिवर्यम्? तस्यात्मजोऽयमात्मा वै पुत्र-नामास्ति न्यायेन स्वपितृवत् सर्वदर्शनमहारथी, महावैयाकरणः साहित्यचूडामणिः वेदवेदाङ्गपारङ्गतो विराजते। इदानीमत्र विदुषां समक्षमस्मदीयजामातुः शास्त्रपाण्डित्येन वाक्कौशलेन चापि मम कर्णौ तृप्येतामिति मौनवृत्तिमवलम्ब्य केवलमहं श्रोतैव भवामि। वरपक्षे ये केचिद्विद्वांसः सन्ति, तानहं प्रार्थये यत्प्रश्नानुपस्थापयन्त्विति।"

पुरोहितवचनमिदमाकर्ण्य वरपक्षतः समागत आचार्योऽब्रवीत्—"'अग्नेर्ढक्'-इति पाणिनिसूत्रस्य का व्याख्या?" शिखापण्डितः स्वव्या-वहारिकबुद्धिमाश्रित्य प्रोवाच—"अग्नेर्ढक्-सूत्रस्य व्याकरणसम्मता व्याख्या तु सर्वे पण्डिता जानन्ति किन्त्वहमद्यास्याभिनवां व्याख्यां प्रस्तौमि। महर्षिपाणिनिर्न केवलं वैयाकरण एवापि तु महान् वैज्ञानि-कोऽप्यासीत्। तेन स्वरचितेषु व्याकरणसूत्रेषु ज्ञानविज्ञानानां विपुलं रहस्यं सन्निवेशितम्। 'अग्नेर्ढक्' सूत्रस्य मदीयेयं व्याख्या विज्ञानस्य सार्वभौमं रहस्यमुद्घाटयति यत् प्राणवायोरभावेऽग्निर्न ज्वलति। अतएव यदि कोऽपि जनोऽग्नेः प्रभावेण ज्वलति तर्हि तं कम्बलादिना ढक आच्छादय। एवं कृते सति वह्नेश्शमनं भविष्यति। सूत्रमिदं वह्निज्वलतो जनस्य प्राणरक्षोपायं विनिर्दिशति।" अग्नेर्ढक्-सूत्रस्या-ऽभिनववैज्ञानिकीं व्याख्यामधिगम्य सर्वे आश्चर्यचकिता बभूवुः। यावत्सर्वे करपुटवादनपुरस्सरं तं साधुवादं विज्ञाप्य व्याख्यामिमां समर्थयन्ति तावदेवाऽपरपक्षस्याचार्यो द्वितीयं प्रश्नमुपस्थापयामास—"किं लक्षणं काव्यस्य?" काव्यं नाम को जन्तुविशेष इति शिखापण्डितस्य बुद्धिर्नाधिगतवती। किन्तु प्रश्नोपस्थापनसमनन्तरमेव सहजतया तेन झटिति भणितम्—"काव्यं काव्यलक्षणमिति।" विचित्रलक्षणेऽस्मिन् शङ्कावकाशमालक्ष्य महाभारते भीष्मवत्तर्कचक्रमादाय शिखापण्डितस्य

श्वसुरस्तल्लक्षणस्य साधुतां प्रतिपादितवान्—"कवेः कर्म भावो वा काव्यम्। तत्को ज्ञातुमर्हति ? स्वयं कविरेव सहसा स्वकर्म भावं वा लक्षितुमसमर्थो भवति। यद्येवं न स्यात्तर्हि आचार्यभरतादारभ्य पण्डित-राजजगन्नाथपर्यन्तं कियन्तोऽप्याचार्याः काव्यस्य लक्षणं कृतवन्तः। तेषु सहृदयाः किमेकान्ततः श्रद्दधति ? अतएव सुष्ठु भणितं 'काव्यं काव्य-लक्षणमिति।'" परपक्षोऽत्रागासीत्। एवं शास्त्रार्थे विजयिनः शिखा-पण्डितस्य महती प्रतिष्ठा जाता। अन्येद्युः शिखापण्डितः स्वभार्यया सह निजगृहमाजगाम।

एवं गच्छता कालेन शिखापण्डितस्य पिता श्रीमद्धर्मध्वजशास्त्री लोका-न्तरं प्राप्तः। आसीत्तस्य यजमानपङ्क्तिः सुदीर्घा। अथ तत्सर्वः पौरोहित्य-कर्मभारः शिखापण्डितस्य स्कन्धोपरि निपतितः। कदाचिन्नवरात्रे कस्य-चिद्यजमानस्य गृहे पुरा कण्ठस्थं दुर्गासप्तशतीपाठं कुर्वता तेन 'भार्यां भक्षतु भैरवो'त्यनुप्रासललितः पाठः कृतः। 'रक्षतु'पदस्य स्थाने 'भक्षतु' पदस्योच्चारणेन विपरीतफलप्रभावाद् यजमानस्य पत्नी दिवंगता। कदापि समूहपाठे केनचित् पण्डितेनैतद्विज्ञाय शिखापण्डितस्य भ्रष्टपाठ-रहस्यमुद्घाटितम्। अथ सः तस्य यजमानस्य कोपभाजनो बभूव। अन्यैरपि यजमानैः स्वपौरोहित्यान्निषिद्धः। इत्थं तस्येयमाकाशवृत्तिरपि विध्वस्ता बभूव।

पुरा गोचारणप्रसङ्गेन समीपवर्तिनो ग्रामस्य कोऽप्याभीरपुत्रः शिखा-पण्डितस्य बालसख आसीत्। एकदा तस्य द्वारं गत्वा शिखापण्डितः तं कदाचित् सुललितां पौराणिकीं कथां श्रावयामास। सोऽपि प्रसन्नो भूत्वा निजमित्रं शिखापण्डितं भोजनं कारयित्वा तस्मै भूयसीं दक्षिणां ददौ। कथाप्रसङ्गे शिखापण्डितेन—'अग्निमुखा वै देवाः' इति श्रुतिवचनं कथित-मासीत्। सुस्थितः सः तं विवृण्वन् पुनरपि प्राह—"सखे, पूर्णसङ्केतयुक्तं किमपि पत्रं पत्रपेटिकायां निक्षिप्तं यथाभीष्टेन जनेन प्राप्तं भवति तथैवाभीष्टदेवनामोच्चारणेन सहाग्नौ प्रक्षिप्तं हविस्तं देवं प्रति गच्छति। एवमेव यदि केनापि स्वपित्रादिभ्यः किमपि देयं तत्तु ब्राह्मणोदरे प्रापयित-व्यमिति। यथोक्तं भाषायाम्—"बभनन कऽ पेट सुरपुर कऽ डाकखाना हौ।" इदं श्रुत्वा स आभीरपुत्रोऽचिन्तयत्—'यदहं मित्रपण्डितमेनं दुग्धदध्यादिकं भोजयामि तदवश्यमेव मम पित्रादीनां तृप्तिकारकं भविष्यति। अस्योदरे निक्षिप्तं वस्तु ते प्राप्स्यन्ति। अथ प्रकटतयोवाच—

"भो मित्र, त्वया प्रतिदिनं प्रातःकालेऽत्रागत्य मया निवेदितं दुग्धदध्यादिकं भोक्तव्यमिति।" शिखापण्डितः सहर्षं तस्य सङ्कल्पं स्वीकृतवान्।

अथ सः शिखापण्डितो नित्यमेवाऽऽभीरगृहं गत्वा यथेच्छं दुग्धदध्यादिकं भक्षयति स्म। किन्त्वाभीरभार्या जानाति स्म यदयं सरलस्वभावो मम पतिः शिखापण्डितेन वञ्चितो भवति। कथमस्माद्धूर्तान्मुक्तिः स्यादिति विचारमग्नासीत्तदैव तस्या प्रतिवेशिनी तत्रागतवती। तया पृष्टा यदाऽऽभीरभार्या निजचिन्ताकारणं व्यक्तीकरोति तदा सा तां किमपि बोधयामास। एवं मुक्त्युपायं ज्ञात्वा सा मोदनिर्भरा जाता।

अपरेद्युः प्रातःकाले शिखापण्डितो यदाऽऽभीरद्वारं प्राप्तस्तदा तस्याऽऽभीरसखः कुत्रापि गतः आसीत्। केवलं तस्य पत्नी खिन्नमना तत्रोपविष्टाऽभूत्। पण्डितोऽपि क्षेमं पृष्ट्वा तस्याः खेदस्य कारणमपृच्छत्। सा कपटप्रलापं कृत्वा प्रोवाच—"पण्डितवर, अद्य रात्रौ मयैकः स्वप्नो दृष्टः। स्वप्ने मे दिवंगता श्वश्रूर्मामवोचद्यत्तस्याः मुसलं तत्र भग्नं जातम्। अतएव तस्यै मुसलं प्रेषणीयम्। एतत्प्रयोजनायेदानीं तव मुखे (उदरे) मुसलप्रक्षेपं करिष्यामि येन तन्मम श्वश्रूं प्रति गच्छेत्।" आभीरभार्याया इदं वचनं श्रुत्वा शिखापण्डितः—'अद्यानेन विधिना मम मरणं ध्रुवमत एवेतः पलायनं वरमिति मनसि कृत्वोत्प्लुत्य प्रणष्टः। एतस्मिन्नन्तरे सोऽप्याभीरः कुतोऽपि समायातः। पत्नीं रुदनीं दृष्ट्वा सः तां रोदनकारणं प्रपच्छ। तया कथितम्—"अद्य शिखापण्डितेन मम मुसलं याचितम्। तत्तु मम पितृगृहात्प्राप्तमतः प्रियमिति मत्वा मया न दत्तम्। ततः सः क्रुद्धः सन् प्रतिनिवृत्तः।" "अहह त्वया दारुणमनुष्ठितम्। मुसलं हि सामान्यं वस्तु। तत्कृते त्वया मे मित्रस्यापमानः कृतः। देहि, तत्तस्मै प्रयच्छामो" त्युक्त्वा हस्ते मुसलमादाय वेगेन धावन् तं मार्गयन् यदा ग्रामाद्बहिर्गच्छति तदा पलायमानं शिखापण्डितं मुसलं प्रदर्श्य, "भो मित्र, गृहाणेदम्। तिष्ठ, अयमहमागतोऽस्मीति" वारम्बारमाकारितवान्। कर्णमदत्त्वा पलायितः शिखापण्डितः पुनः कदापि तत्राभीरद्वारं न गतवानित्यस्माभिः श्रुतम्।

शिखापण्डितविख्यातः कल्पनायाः समाश्रये।
लोकेऽपि प्राप्यते नूनं निजकर्मस्वभावतः॥
यैः कथारसिकैर्नित्यमास्वाद्यत इयं कथा।
शुभं भवतु सर्वत्र तेषां प्रभु-प्रसादतः॥

: ६ :

## योगिराजः

अस्ति वाराणस्यां गङ्गाकूले पञ्चगङ्गा नाम घट्टः। तत्र नित्यस्नानार्थिष्वेको जटिलो योगिराज आसीत्। नित्यमेव गङ्गास्नानं विधाय कस्मिंश्चित्काष्ठफलके मुहूर्तमिवोपविश्य ध्यानस्थो भूत्वा पूर्णकमण्डलुमादाय सोपानमार्गेण वीथीमतिक्रम्य कुत्रचिद् गच्छति स्म। सदैव-मौनावलम्बी सः शतायू प्रतीयते स्म किन्तु घट्टसोपानारोहणमनायासं करोति। गौरवर्णस्य देवोपमस्य तस्य तपस्विनो मुखमण्डलं तपःकान्त्या दीप्तमासीत्। तस्यानुभावो रहस्यमय आसीत्। यदि कस्मिंश्चिद्दिने मया सः नावलोकितः तदादिवसं मनः व्याकुलं जायते स्म। आगामिनि प्रातःकाले मम प्रयत्नो भवति पूर्वमेवागत्य तद्दर्शनसमर्थो भवामि। तद्दर्शनादपूर्वा शान्तिरनुभूयते। प्रतिदिनमेव मया सङ्कल्प्यते यदेकदाऽवश्यमेवास्य मौनभङ्गं करिष्यामि।

एकदा कुतूहलमना रात्रेरन्तिमे प्रहरे तत्र गत्वा यावत्पश्यामि तावत्स योगिराज एकस्मिन्काष्ठफलके पूर्वाभिमुखोपविष्ट आसीत्। पदध्वनिं विमृश्य मां प्रत्युन्मुखीभूताय तस्मै सविनयं प्रणाममकरवम्। आशीषमुद्रायां दक्षिणकरं प्रयुज्य तेनोक्तम्—"वत्स, अस्ति कश्चिद्विशेषो यत्त्वमद्य नियतस्नानवेलायाः प्रागेवात्रागतोऽसि ?" तस्यानेन मौनभङ्गेन कोऽप्यपूर्वानन्दोऽनुभूतः। मनसः सर्वे वितर्का विगलिताः। सप्रश्रयं मयोक्तम्—"नास्त्येतादृशः कोऽपि विशेषः।" सङ्केतेन सः मां निजपार्श्वे न्यवेशयत्। रहस्यभेदनमिदानीं सुकरमिति विचार्य, तस्य सहजभावमालक्ष्य मया तन्मुखे साशयदृष्टिपातः कृतः। प्रकटतया निवेदितवान्—"भगवन्, यदि नास्ति खेदकरं तर्हि भवतो वृत्तान्तं श्रोतुमभिलषति मे श्रोत्रयुगलम्। प्रसीदतु, मामावेदयतु।" इदमुपश्रुत्य स जहासाब्रवीच्च—"अशेषा खलु रात्रिः। उपस्थितेयं स्नानवेला, तथापि यदि ते रोचते, श्रूयताम्—

"कोऽहमिति न जानामि। कुत्र मया जन्म लब्धं पितरौ च कौ? बान्धवैर्मह्यं काऽभिख्या दत्ता? यच्छ्रुतं तदेवावेदयामि। यदाहमबोधशिशुरासम्, कुम्भपर्वणि स्नानार्थं तीर्थराजं गताभ्यां पितृभ्यां जनसम्मर्दवशात्तत्र वियुक्तो जातः। काश्याः कोऽपि सज्जनो मां प्राप्य तस्मिन्

जनसम्मर्दे सुचिरं व्यचरत्। किन्तु मम जन्मदातारौ नाधिगतौ। निराशः स मां सनाथीकृत्य काशीं प्रत्यावर्तत्। एकदा सः प्रातःकाले कुत्रापि गतवान् पुनश्च कदापि नागतवान्। न जाने दैवेन किं दुर्घटितम्? मम दौर्भाग्येन तस्यापि छायाऽपगता। तदानीं काशी मुगलशासकौरंगजीवस्यातङ्केन भृशं पीडिताऽऽसीत्। षड्वर्षीयोऽहं निराश्रितो भूत्वा समधिकत्रस्तो जातः।" इत्युक्त्वा जटिलस्तपस्वी भावविह्वलो भूत्वा किञ्चिद् विरराम। जिज्ञासुना मया पृष्टम्—"भगवन्, कथनेनानेन भवतः आयुः प्रायेण त्रिशतवर्षीयं वर्तते। एतावता कालेन भवान् काश्यामेव निवसति?" सोऽपि प्रकृतिस्थो भूत्वा प्रोवाच—"नैवम्। धर्मपितरि दिवंगते सति किंचित्कालपर्यन्तं भिक्षावृत्तिमाश्रित्य मया काश्यामेव निवासः कल्पितः। तत्पश्चात् हिमालयप्रदेशं गतवान्। हिमोपत्यकायां गहनं वनं प्राप्यैकस्मिश्चिन्निर्झरकूले शिलाखण्डे गृहबुद्धिं बवन्ध; कन्दमूलफलमुपभुज्य निर्झरजलमापीयेतस्ततो बभ्राम। एवंप्रकारेण निवसता मया तत्र बहुकालानन्तरं कोऽपि तपस्वी दृष्टः। स मां निजाश्रमं नीतवान्। तत्र महता स्नेहेन स मामक्षरपरिचयादारभ्य सर्वं शिक्षितवान् पश्चाच्च समाधिमपि शिक्षयामास। तस्योपदेशमनुसृत्याहं तपश्चरणे प्रवृत्तोऽभवम्। समाधिनिरतेन मया कियत्कालक्षेपः कृत इति न ज्ञातः किन्तु यदा समाधिभंगो जातः, तत्र न कोऽपि दृष्टः। केवलं सर्वत्र हिमराशिः आसीत्। नासीत्तत्र पर्णशाला नाऽपि मे दीक्षागुरुस्तपस्वी। अतस्तस्मात् स्थानादवक्रम्य वसतिमेकां प्राप्य तत्र शिवायतने वर्षपर्यन्तमवसम्। ग्रामवासिनः प्राणधारणाय पर्याप्तं गोदुग्धं मामुपहरन्ति स्म। तत्रैव मया श्रुतं यदिदानीं भारते आंग्लशासनं वर्तते। अथ तत्स्थानं परित्यज्योत्तराखण्डस्थानि तीर्थस्थलानि पर्यटन् कदाचिदेकाकी कदाचित् साधुभिः सहाखिले भारते वर्षे सुचिरं व्यचरम्।" अत्र मया जिज्ञासा कृता—"भगवन्, सुदीर्घेऽस्मिन् जीवनकाले कदापि कोऽपि व्याधिः भवताऽनुभूतो न वा?" सः जटिलो विहस्योवाच—"वत्स, को नाम व्याधिरिति नाहं वेद्मि। काचिदपि पीडा मां न बाधते। इदानीन्तु पिपासाबुभुक्षाद्योऽपि मां न पीडयन्ति। तेभ्यः सर्वेभ्यो मुक्तोऽहम्।" नाहं विश्वसिमी"ति मया कथिते, स, "अस्त्येवाश्चर्यकरमिदमि"त्युक्त्वा तूष्णीको जातः। सहजजिज्ञासावशात् पुनरहमपृच्छम्—"सम्प्रति भवान् कदारभ्य काश्यां वसति?" स आह—"पर्यटन् यदाहं काशीं प्राप्तः तदा मया

श्रुतं—कोऽपि मालवीयमहोदयः काशीविश्वविद्यालयं स्थापयति । तस्मिन् काले मदीयायुः पञ्चाशद्वर्षमिव संल्लक्ष्यते स्म ।" "किन्त्विदानीन्तु शतायूरिव परिलक्ष्यते भवानिति" मय्युक्ते सति स निःश्वस्य प्राह—"सुष्ठु भणसि, अत्रागतं मां कालः पक्षमारोप्य नयति । सम्प्रति श्रान्तोऽहं लोकयात्रया । अभिलषति मे हृदयमत्रैव शरीरमुक्तिम् ।" "काश्यामिदानीं कः स्थानविशेषो भवतामावासेन धन्यतां व्रजतीति" मयि पृष्टे तेन भणितम्—"अत्रैव मातुर्गङ्गायाः क्रोडे वसामि । ब्राह्ममुहूर्ते स्नानविधिं समाप्य, वृद्धकालमन्दिरं गच्छामि । मृत्युञ्जयमहादेवं प्रणम्य ततो वरुणातटं गच्छामि । तत्र शैलपुत्रीदेव्याः मन्दिरस्य पार्श्वे स्थितायां जीर्णकुट्यां दिवसमतिवाह्य, अस्तङ्गते सवितरि पुनरत्रैवागत्य रात्रिविश्रामं करोमि । जागरित एव रात्रिं व्यपनयामि ।"

विस्मितेन मनसा मया सः पृष्टः—"अपि भवानहोरात्रं जागर्ति ? कदापि निद्रां न भजते ?" सस्मितं सोऽब्रवीत्—"वत्स अस्त्येवम् । यस्मिन् दिने समाधिः पूर्णतां गतस्ततः प्रभृति निद्रादेव्याः कृपा ममोपरि नाभूत् ।" अथ प्रकरणमिदमुपसंहरन् ममान्तिमा पृच्छेयमासीत्—"भगवन् ! भवानलौकिकोऽद्भुतश्चेति । तथापि स्वीयानुभूतं कमप्यद्भुतं वृत्तान्तमावेदयतु ।"

शान्तमनाः स योगिराजो वक्तुमारेभे—"बहवो मया विस्मयकारिणो वृत्तान्ताः दृष्टाः । किन्त्वत्र निवसता मया पञ्चगङ्गाघट्टे महदद्भुतमतिरोमाञ्चकरं दृष्टम् । अमायां तिथौ निशीथे हिमशुभ्रा श्वेतवसनैका वृद्धा मध्यसरित्प्रवाहान्निःसृत्य जलेऽपि स्थल इव संचरन्ती तीरमागच्छति सोपानमार्गेण चोपरि गच्छति । घटिकाद्वयानन्तरं सैवं वृद्धा स्त्री तटमपरमागम्य तत्रैव मध्यप्रवाहे विलीना भवति । यदि त्वमप्याश्चर्यमिदं द्रष्टुमिच्छसि, मया सहागामिन्यमावस्याया रात्रावत्रैव वस ।"

अथागामिन्यमायां तिथौ तत्र रात्रावहमपि गत्वा योगिराजमपश्यम् । तेनोक्तम्—"एहि वत्स उपविश । मौनं भज । यथासमयमहं सङ्केतं करिष्यामि ।" प्राप्ते समये योगिराजेन सङ्केतो दत्तः । अल्पेनैव समयेन मध्यप्रवाहादेकाऽऽकृतिः प्रादुर्भूता । सा पदात्येवास्मद्दिशमनुसरन्ती प्रचलितवती । विचित्रमिदं दृश्यं दृष्ट्वाऽहं रोमाञ्चितो जातः । यद्यपि योगिराजस्य सामीप्येन कस्यचिद्भयस्यावकाशो नासीत् तथापि मे

हृत्कम्पनं वर्धितमेव। सा स्त्री तटं प्राप्य सोपानपरम्परामारुह्य कुत्रचिद् गतवती। आवां तु तस्मिन्नेव काष्ठफलके जडीभूतौ तस्यारुपरि दृष्टि-निक्षेपं कुर्वन्तौ निःशब्दावास्व। तस्यां गतायां मया योगिराजः पृष्टः—"सा तत्रभवती का कुत्र च गच्छति?" योगिराजोऽब्रवीत्—"मन्येऽहं माता गङ्गेयमस्ति नान्या भवितुमर्हति किन्तु सा स्वगृहात् कमुद्दिश्य कुत्र च गच्छति, कथं मार्गविपर्ययेण पुनरागच्छतीति सर्वं रहस्यात्मकं वृत्तम्।" अथ योगिराजे मौनमाश्रित्य स्थिते सति मे मनसि बहवो वितर्काः समुद्भूताः। निद्रा तु न जाने कुत्र गता मां विमुच्य। घटिकाद्वयानन्तरं सैव स्त्री योगिराजोक्तप्रकारेण पुनरागम्य तत्रैव मध्यप्रवाहे विलीना बभूव। रहस्योद्भेदनमवश्यमेव करिष्यामीति मदीयं निश्चयं श्रुत्वा योगिराजः कस्यचिदनिष्टस्याशङ्कया त्रस्तो जातः। "यदि सा स्त्री सत्यमेव माता गङ्गाऽस्ति तर्हि नास्ति भयस्य कारणं यतो हि काऽपि माता स्वपुत्राणामनिष्टं नैव विदधाति।" एवं कथिते सति सः कथञ्चिदाश्वस्तो बभूव।

अपरामावस्यायाः रात्रौ नियतकाले यदा सा स्त्री यथोक्तप्रकारेण सोपानारोहणमारब्धवती, तदैव सहसा मया तस्याश्चरणयोः पतितम्। ससम्भ्रमं सा क्षणं स्थित्वा पुनः पादमुत्थाय गन्तुमियेष किन्तु तदवस्थागतेनैव मया सानुनयं पृष्टम्—"मातः! का त्वं? कुत्र कथं वा गच्छसि?" सा गम्भीरमृदुवीणानिनदितेन स्वरेण—"मत्प्रसादेनायं योगिराजः सर्वमेतज्जानाति, स एव त्वां वक्ष्यति, वत्स! मुञ्च मां गमनाय, ममायं विधिः विलम्बासहः" इति प्रबोध्य सा झटित्येव सोपानपरम्परामतिक्रान्तवती। तस्यां गतायां विगतकल्मष इव, पीतामृत इव, आनन्दरसनिमग्न इव, योगिराजमुखासक्तदृष्टिरहं तद्वृत्तान्तश्रवणाय पर्युत्सुकीभूय तत्रासम्। योगिराजेन यदुक्तं तन्महदाश्चर्यकरमासीत्। स मां सङ्क्षेपेणैव समबोधयत्—"वत्स, दृष्टैव त्वया देवी सातीवखिन्ना क्लान्ता श्रान्तेव परिलक्ष्यते। पापिनो जना अनुदिनं मातुर्भौतिकं कलेवरं प्रदूषयन्ति। अनेन तस्याः पापप्रक्षालनशक्तिर्क्षीणतामेति। सा स्वामृतदायिनीसञ्जीवनीशक्तिमाधातुमेव प्रत्यमावस्यायाः रात्रावितो निर्गत्य बिन्दुमाधव-मृत्युञ्जयमहादेव-विश्वनाथदर्शनं विधाय प्रयागं गत्वाऽक्षयवटमूलं प्रणम्यानन्तरं वेदव्यासमापृच्छ्य पुनरेति।

बहुकालान्मातुर्गङ्गायाः शवत्याधानस्यायमेव क्रमः ।" योगिराजो निःश्वस्य तूष्णीको जातः । जनाः प्रदूषणानि मातुर्गङ्गायाः क्रोडे निक्षिप्य तां भृशं खेदयन्ति, न तां सेवन्ते इत्यनुभूय ममापि हृदयं विषण्णं जातम् ।

अथ प्रत्यूषकाले मज्जनविधिं परिसमाप्य स योगिराजो मह्यं भूयोभूय आशिषं प्रदाय यथापूर्वं गतवान् । अपरेद्युः स्नानवेलायां मया स न दृष्टो नाप्यागामिषु दिवसेषु । दिवसकतिपयानन्तरं तमन्वेष्टुमहं मृत्युञ्जय-मन्दिरं, वरुणातटे शैलपुत्रीदेव्या मन्दिरस्य पार्श्ववर्तिनं प्रदेशं बहुधा गतवान् किन्तु सः कदापि न दृष्टः । सः कुत्र गतः ? तस्य किमभूदिति किमपि नाधिगतम् । मन्येऽहं भौतिकप्रपञ्चं विहाय तज्ज्योतिर्महाज्यो-तिषा संगतम् । अद्यापि योगिराजस्य स्मरणमात्रेण सर्वं पूर्ववृत्तं साक्षाद् दृष्टिपथमायाति । नाहं निर्णेतुं शक्यो यदमायां रात्रौ तत्र मया यद्दृष्टं श्रुतमनुभूतं वा तत्सर्वं सत्यमासीदथवा योगिराजस्य योगमाया-याश्चमत्कारो वा ।

योगिराजसमाः सन्तो नूनं सन्ति भुवस्तले ।
प्राणिनो नैव पश्यन्ति मायाबाधितदृष्टयः ॥
अहो स्वार्थपरा वृत्तिः स्वेच्छाचारिजनस्य हि ।
वेदनां नानुभूयन्ते गङ्गामातुस्सुदुःसहाम् ॥
ज्ञातुं साधूनपि द्रष्टुं गङ्गामातुः प्रदूषणम् ।
दृष्टिं दास्यति लोकाय प्रभुणेयं कृता कथा ॥

## सुकन्या

आसीत्तदानीं माघमासस्य कृष्णपक्षः। रात्रेरन्तिमे प्रहरे रेलयानादवरुह्य यदा बहिर्गच्छामि तदा शीतप्राबल्येन मदीया देहयष्टिः कम्पिता जाता। नीशारेण देहमावेष्ट्य शिरस्समाच्छाद्य कर्णौ पिधाय स्थातव्यं प्रयातव्यं वेति द्वैधीभूतायां मनःस्थितौ क्षणमात्रं विरम्य पुनश्च गमनमेव वरमिति निश्चयं कृत्वा ततः प्रस्थानं कृतवान्। इतो मे ग्रामः क्रोशमात्रं दूरं वर्तते। तत्र गन्तुं नास्ति वाहनसाधनमतस्तस्य चिन्तैव करणीया नासीत्। पदयात्रयैव सर्वे गच्छन्ति। ग्राममार्गोऽपि किञ्चिद्दूरं यावद्रेलपथनिकटेन समानान्तरोऽस्ति। हस्तेनैकेन लघुमञ्जूषां समादाय करमपरं नीशारान्तर्गतं कृत्वा मन्दगत्याऽवतरणमञ्च[1]मतिक्रम्य तमेव मार्गमनुसरता मया ग्रामयात्रा समारब्धा।

रात्रिस्तु मौनावलम्बिनी काचिन्मानिनीव निस्तब्धतां भजते। रेलयानागमनेन यत्किञ्चित्कोलाहलं समुत्थितमासीत्तत्तस्य गमनेन सहैव विलुप्तं जातम्। महच्छैत्यानुभवेन प्रतीयते यन्नभो वर्षतीव शीतम्। नूनं तुषारपतनं भूतम्। नीहारस्तु सर्वत्र प्रसृत आसीत्। तस्य सघनतया मे दृष्टिर्विफलतां गता। नीहाराच्छन्नेषु दिक्षु महता प्रयत्नेनापि नाधिकं दूरं द्रष्टुं समर्थो भवामि। शीतत्रस्ता वृद्धा इव समीपवर्तिनो वृक्षा अपि श्वेतकम्बलेनात्मानमाच्छाद्य निभृतास्तिष्ठन्ति। नीहारप्रभावेणापूर्वं दृश्यमासीत्। कैलासोऽत्रागत्य सम्पुटीकृतं दिगम्बरस्याट्टहासमिव विकिरति। हिमालयः स्वश्वेतदुकूलेनात्र वितानमिव वितनोति। महेन्द्रगजो निजदेहकान्त्या निभृतपर्यटनाय निविडमावरणमिव प्रसारयति। वायुः समुद्रस्य फेनराशिमुद्धृत्योद्धृत्याकाशाय प्रयच्छतीव। आकाशमहोरगस्य निर्मोकः सर्वत्र प्रसरतीव। आकाशगङ्गाजलस्थानां शफरोदराणां शल्कचूर्णानि विकीर्णानीव प्रतीयन्ते। बिसतन्तुमयेनातिसूक्ष्मविमलेनाच्छादकेन विरचितं प्रकृतिवध्वा अवगुण्ठनमिव प्रतिभाति। तूलपटलोत्क्षेप इव विभाति। वृद्धशबरीशर्वरीश्वेतचिकुरचय इव विराजते। नभोलक्ष्म्याऽधः प्रेषितानि

१. 'प्लेटफार्म' इति।

चामराणोवाथवाऽऽकाशोद्गतानि काशकुसुमानीव संल्लक्ष्यन्ते। शिशिर-देवतायाः श्वेतातपत्रमिव प्रसारितमाभाति।

एवं नीहारमण्डलोदरे प्रविष्टोऽध्वनि दत्तदृष्टिरहं यावत्कियन्मात्रं दूरं गच्छामि तावदेकस्मिन् तरुमूले मया काचिदाकृतिरवलोकिता। केय-माकृतिर्भवितेति मे मनसि बहवो वितर्काः समुद्भूताः। लुण्ठकभयेन मे चरणौ जडीभूतौ। अधुनाहमेकाकी निश्शस्त्रश्च मनसेष्टदेवान् स्मरन् पदात्पदमुद्वहन् यावदधिकतरं सामीप्यं भजे तावत्सा स्त्रीमूर्तिरिति प्रति-भाति स्म। ततश्च क्रमशो विभाव्यमानाकृतिमतिविषण्णामिव, खेदाल-सामिव, भयाकुलामिव, संत्रस्तामिव, विपत्सन्तानैः विक्षुब्धामिव, दुष्टग्रहैः पीडितामिव, आशया लुण्ठितामिव, मनोरथैर्वञ्चितामिव, मनसः खिन्नता-मिव कृतबहिरवस्थितिं, म्लानां पुण्डरीककलिकामिव, लुब्धकबाणविद्धामिव भयसंकुचितगात्रां मृगशावकीं, शैत्यप्रभावाद्हिमकठिनकायामश्रुकलुषितान-नामनवरतरोदनवशात्कुपितनयनामुन्मुक्तकेशकलापिनीं निवातस्तब्धदीप-शिखामिव तप्तकाञ्चनावदातवर्णां विंशतिवर्षीयां कन्यामपश्यम्।

दृष्ट्वा च तां तथाभूतां मे मनसः शतशः सङ्कल्पाः प्रादुरासन्—'इय-मत्रभवती का भवितुमर्हति ? दैवी वेयं मानुषी वा ? दुष्टाभिप्राया काचित्पिशाचिनी मायाऽथवाऽऽसुरी ?" अबलेति मत्वा सबलेन मनसा विचार्य तां ज्ञातुकामोऽहं मार्गं विहाय निश्शब्दस्तत्र गतवान्। तथापि कस्यचिदागमनं परिलक्ष्य सा ससम्भ्रमं सहसोत्थाय वेगेन प्रचलितवती। मया प्रयुक्तं—अलमतिभयेनेति वाक्यमुपश्रुत्य सा कानिचित्पदानि गत्वैव किञ्चिदाश्वस्ता तत्रैव त्यक्तगमनाऽभूत्। अथ तामुपसृत्य मया पृष्टम्—"सुकन्ये का त्वम् ? अत्र किं करोसि ?" तया तु मन्दस्वरेण केवलमिद-मुक्तम्—"भवान् मम नामाक्षराणि कथं जानाति ? नाहं भवन्तं वेद्मि। अदृष्टपूर्वो भवान्।" सविस्मयं मम मुखान्निःसृतं—"अपि यथार्थं तेऽभिख्या सुकन्येति ?" तया शिरःकम्पेनानुमोदनं कृतम्। अथ "कुत्र ते निवासः ? कथमत्र प्राप्तासि ?" इति मयि पुनःपृष्टे सति सा निःशब्दं रोदितुमारेभे।

अथ तस्याः रोदनमालक्ष्य मयानुभूतं तत्कातरतां दैन्यं दुःखञ्च। यतो ह्यन्तःकरणे घनीभूता पीडेव सन्तापेन द्रवीभूयाश्रुजलव्याजेन निर्गच्छति। नयनजलबिन्दवोऽकथितमपि दुःखं सर्वमावेदयन्ति। एवं संवर्धितकुतूहलो-ऽहमाश्वासनवचनैस्तस्या अश्रुपातं निवार्य स्नेहेन तां प्रबोधितवान्—

"वत्से, मम समीपे नास्ति कस्यचिद् भयास्यावकाशः। मां पितृवन्मन्यमाना निर्भया सत्यावेदय सर्वं वृत्तान्तं येनेमां दशां प्रापिताऽसि। अत्रतो नातिदूरं मे ग्रामः तत्रैव वसामि।"

ततश्च मद्वचोभिप्रत्ययगता पुनर्जीवितेव सा सुकन्या शनैश्शनैरवादीत्—"अस्तीतो नाधिकं दूरं पण्डितपुरं नाम ग्रामः। तत्रोत्तरे भागे श्रीमच्छिवसङ्कल्पशुक्लो नामैको ब्राह्मणः प्रतिवसति। महता परिश्रमेण तेन निजगृहपार्श्वे रसालवृक्षाणां वाटिका समारोपिता। तत्र स्वादुजलपूरः कूपोऽपि खानितः। सः प्राथमिकविद्यालये शिक्षकोऽस्ति। अल्पमात्रिका कृषिरपि तस्य कुटुम्बस्याजीविकासाधनमस्ति। इदानीं सभार्यस्य तस्य परिवारे वृद्धौ पितरौ, कन्याऽहमेका ज्येष्ठा, कनिष्ठौ पुत्राविति सप्तसंख्यकाः सदस्याः सन्ति। श्रीशिवसङ्कल्पशुक्लस्य परिणये जाते बहुकालपर्यन्तं तस्य भार्या जायात्वमित्यन्वर्थसंज्ञात्वं नाप्तवती। भूयसो खलु व्रतोपवासानुष्ठानवतो वृत्तिस्तया समाश्रिता। एवं बहुकालप्रतीक्षानन्तरमहं सकलशुभलक्षणहीना तयोर्दौर्भाग्येनात्मजा समुत्पन्ना। अनपत्यतया सर्वे कुटुम्बिजनाः हर्षामोदभरा जाताः। यथासमयं यथोचितविधिना कृतसंस्कारायाः मम सुकन्येति नाम पितामहो महता स्नेहेन कृतवान्। तयोर्वृद्धयोः क्रीडनमिव साऽहं सहजबालतया स्नेहैकपात्रीभूता न केवलं कुटुम्बिनो जनस्यापितु प्रतिवेश्यजनानामपि मनोविनोदोपायाऽभवम्। तपःक्लिष्टां सिद्धिमिव मामवाप्य मदीया जननी त्वानन्दरससागरे निमग्नैवासीत्। पिता तु मम गृहे उमावतीर्णा, लक्ष्मीरवतीर्णा, सरस्वत्यवतीर्णेति बारम्बारं शिरस्याघ्राय भूयोभूय आशीर्वचांसि प्रयुज्य मोदतां भजते स्म। एवं क्रीडानिरतः समयोऽपि मम शैशवं परिमुष्य न जाने कदा क्व गतवान्? तमन्वेष्टुकामया मया यावद्दर्पणेऽवलोकितं तावन्मन्दस्मितेन नवयौवनेन मम वपुषि निभृतं पदार्पणं कृतम्। साध्वसस्वेदसलिलेन तस्मै अर्घ्यमुपकल्प्य नयनाञ्जलिना तत्पादयोः पुण्डरीककुवलयराजीवादीनि पूजापुष्पाणि समर्प्य मनसा दत्तहस्तं तमर्चयामास।

वयःप्राप्ता कन्या पितुस्स्कन्धोपरि निक्षिप्ता तूलराशिरिव क्रमशो जलार्द्रतयोपचीयमाना भृशं भारान्विता भवति। सैव दशेदानीं मम पितुरासीत्। वसन्तर्तोः रसालमञ्जरीमिव, निर्भरविकसितां भारनम्रां सञ्चारिणीं पल्लविनीं लतामिव मां दर्शं दर्शं पित्रोः मद्विवाहसम्बन्धिनी चिन्ता

समधिकतरा जाता । कन्या निसर्गतः परेषां न्यासरूपा यत्नेन संरक्षणीया भवति । अतएव पिता मम पाणिपीडनाय दुर्लभवरमन्वेष्टुं भागीरथ-प्रयत्नमारब्धवान् । यथा कोऽप्यसाध्यरुग्णः कस्यचिदपि समर्थवैद्यस्य नामश्रवणमात्रेणातुरतया तत्र धावति तथैव मे जनकोऽपि तस्मिन् ग्रामे तस्मिन् कुले योग्यो वरो वर्तत इति श्रुत्वा तत्काल एव तत्र गच्छति स्म । किन्तु प्रायेण निराशयैव तत्स्वागतं कृतम् । कुत्रचिद्यौतुकस्य महान् राशिः क्वचिद् गोत्रैकता कुत्रचिज्जन्मपत्रिकाविषमता सम्बन्धस्थापनं बाधते स्म । सर्वत्र श्मश्रुकोटिमूर्ध्वं कृत्वा वराणां पितरः तेन सह हेयदृष्ट्या व्यवहरन्ति स्म ।

महासागरे प्रविष्टः कोऽपि यथा ग्राहेभ्यो बिभेति तथैव वरान्वेषकाणामपि दशा वर्तते । प्रातरेव विनिर्गतो मे पिता यदा दिवसावसाने प्रदोषमुखे श्रान्तः क्लान्तः क्षुत्क्षामकण्ठः पर्पटिकौष्ठो धूलिधूसरितदेहः स्वेदस्नातो गृहमायाति, मे मातुस्साशयं दृष्टिपातं विफलयन्मौनमेवाश्रित्य दीर्घमुष्णञ्च निःश्वसिति तदैतत्सर्वं निरीक्ष्य ममोपरि वज्रपात इव भवति स्म । मनसि धिक्कृतिरुदेति स्म कथमहं मन्दभाग्या पित्रोः केवलं शोकायैवोत्पन्ना ? अनुदिनमेवायं क्रम आसीत् ।" कथनेनानेन सह सा किञ्चिद् विरराम । अस्मिन् क्षणे प्रचण्डावर्तान्दोलिते सागरे इव क्षुब्धे मानसे मे इदमासीत्—

"कन्या येषां गृहे नास्ति ते मनुष्याः सुदुर्लभाः ।
कस्मै नेयेति संसारे चिन्तामुक्ता महात्मनः ॥
कन्यया मांसलः कश्चित् कन्याभ्यामस्थिपञ्जरः ।
कन्याभिस्तु क्वचित्प्राणाः धार्यन्ते यदि विस्मयः ॥"

सा पुनराह—"एकदा पिता प्रसन्नवदनो गृहे प्रविष्टः । तं दृष्ट्वा श्रुत्वा च माताऽपि गम्भीरं मोदमवाप । मयाप्यनुभूतं यत्सागरतटविलीयमानसिकताकणमनोरथान् कथमपि लोलुपतरंगघातेभ्यः संरक्ष्यमाणेन मत्पित्रा कथंकथञ्चिदभिमतो वरोऽधिगतः । अनेनालं मे तुष्टिर्जाता । भाग्योपालम्भनं निरस्तम् । बहुकालपश्चात् पित्रोर्मुखमण्डलं हास्यमण्डितमवलोक्य मे हृदयमपीषदुल्लसितम् । पित्रोस्संवादेनेदमप्यालक्षितं यद्वरपक्षः संबन्धविनिश्चयात्पूर्वं कन्यानिरीक्षणमवश्यमेव करिष्यति ।

कन्याऽवेक्षणाय निर्धारितायां तिथौ मम कुटुम्बस्य व्याकुलता दर्शनीयाऽसीत् । आतिथ्ये काचिदपि त्रुटिर्न स्यादिति सर्वेषां प्रयत्न

आसीत् । केनापि ध्वनिना तेषां समागमनशंकया सर्वे सतर्काः सञ्जायन्ते स्म । अवसरानुरूपं जनन्या प्रसाधिताऽहमपि स्वपितामहीपार्श्वे स्थिता न जाने कस्मिन्कल्पनालोके निमज्जिताऽऽसम् । सहसा 'ते समायाता' इति पितृशब्देन मे हृत्कम्पनं वर्धितम् । मया काचिदनिर्वचनीयाऽव-स्थाऽनुभूता ।

अथ किञ्चित्क्षणानन्तरं स्वानुजाभ्यां सह जलपूर्णपात्रमादाय पित्रा नीयमानाहं तत्र गतवती । त्रिसंख्याका निरीक्षणमण्डली तत्र विराजते स्म । तस्यां द्वौ वृद्धावन्यश्च युवकः । वृद्धयोःपादमूले प्रणम्य सलज्जमधोमुखीभूतां मां ते किमपृच्छन्, मया किमावेदितमिति सर्वमहं नावेदिषम् । कदाहं तत आगत्य मातुर्क्रोडे निपतितेत्यपि न जानामि । आतिथ्येन भृशं प्रीतास्ते निर्वतिताः । सप्ताहान्ते पिता लग्नादिनिर्धारणाय तत्र गतवान् । किन्त्वाशायाः विपरीतं किमपि घटितम् । वरस्य पिता मयि (कन्यायां) दोषमुत्पाद्य यौतुकराशिं द्विगुणितमकरोत् । तेन निष्ठुर-तया भणितं यदयं राशिर्देयः तर्हि भवत्कन्यया सह मे पुत्रस्य विवाहः शक्यो नान्यथा । श्रुत्वेदं मे पिता छिन्नमूलो वृक्ष इव पपात । निर्वतितः दुश्चिन्तया शय्यां प्रापितः ।" निशम्येदं मम मुखान्निःसृतम्—

"दैवाद्यस्य कुले कन्या नहि वित्तं यथेप्सितम् ।
नूनं तस्य मनुष्यस्य जीवनं नरकायते ॥"

दुःखक्ष्वेलांकुरभूमिः सुकन्या सोच्छ्वसितमुवाच—"पितुर्दशा नासीत्सहनीया । विधेरिदं निष्ठुरत्वं नियतेः क्रूरत्वमालक्ष्य, ममकृते एव सर्वं दुःखमित्यालोच्य मयाऽपि दारुणं निश्चितम् । अद्य रात्रौ गृहान्निर्गत्य ग्रामाद्दूरं रेलयानसमक्षं शरीरोत्क्षेपणं कृत्वा प्राणत्यागं करिष्यामीति मनस्यवधार्य प्रचलितवती । किन्तु यावदत्रागच्छामि तावद्रेलयानमपि निर्गतम् । दुर्दैवेनास्मिन् विधावपि वञ्चिताऽस्मि । हा किं करोमीति विचारयन्तो मन्दभाग्या वृक्षमूले विषण्णा भवद्भिर्दृष्टा । अयमेव मदीयो वृत्तान्तः ।

अहो दैवस्य नैष्ठुर्यम् । निर्दाक्षिण्याः खलु विधातुर्वामाः वृत्तयः । एवं विचारयता मया सा बहुधा समाश्वासिता । ममानुरोधवशात्सा स्वगृहं प्रति प्रस्थितवती । अहं तु केनचिदन्तरेण तामनुसृतवान् । तस्याः निवासो ग्रामाद्बहिरेवासीत् । सा तत्र गत्वा निरर्गलं कपाटमुद्घाट्य गृहमनुप्रविष्टा । अहमपि स्वग्राममगच्छम् ।

अपरेद्युः सुकन्यायाः गृहं गत्वाऽहं तस्याः पितरं सर्वं प्रपच्छ। पुनश्च माध्यस्थ्यं कृत्वा तेनैव दृष्टपूर्वेण वरेण सह सुकन्यायाः पाणिग्रहणं कारयामास। सेदानीं स्वपतिगृहे ससुखं निवसति।

कूलद्वयं यथा पुण्या पुनातीह पयस्विनी।
कुलद्वयं तथा कन्या सुखप्रीतिविवर्धिनी॥
कन्यारत्नमुपेक्षन्ते ये नराः धनलिप्सया।
यशोमानवियुक्तानां तेषां नष्टा कुलीनता॥

नैषा कथा कस्यचिदेकगृहस्य
गृहे गृहे सन्ति तथा सुकन्याः।
ददातु सुमतिं प्रभुरेव तेभ्यः
पितरो वराणां ये सन्ति लुब्धाः॥

: ८ :

## बकमातुलः

अस्मिन् वर्षे बहुकालानन्तरं ग्रीष्मावकाशे नगरात् स्वग्राममागतोऽहं मनसि सम्प्रधार्य यत्तत्र सुस्वादूनि मधुराम्रफलानि चिरमास्वाद्योपभुज्य यथासुखं कालं व्यतीत्य पुनर्गमिष्यामि। निजाम्रवाटिकायां रससिक्तरसाल-तरुसघनवीथीसु सान्द्रच्छायायामुपविश्य पूर्वपवनान्दोलितसहकारपल्लवेषु सुखकरेषु कोकिलकूजितेषु दुर्दिनेषु शाखाग्रतः स्वतश्च्युतानां रसनिर्भराणां मधुरपक्वाम्रफलानामास्वादनं कस्मै न रोचते ? अन्यदेव सुखमिदमिति शैशवस्मृतिर्प्रादुर्भूता। सहसा वाटिकाया उत्तरकोणतो 'बकमातुलः पतित' इति कोलाहलः समुत्थितः। प्रतिक्षणं वर्धमानं जनरवमाकर्ण्य यावत्तत्र वेगेन गच्छामि तावद् वृक्षात् पतितं मूर्च्छितं निश्चेष्टं निमीलित-लोचनयुगलं शिथिलितहस्तपादं दैवेन दुर्घटितं कृतकालसन्निधानमिव गम्भीरनिद्रायां प्रसुप्तमिव विषपानाचेतनमिव मदिराघूर्णितमुग्धमिव ग्रीष्मसन्तापदग्धमिव कर्कशभूलुठितं युवानं बकमातुलं पश्यामि। वृक्षा-रोहणे पटुर्बकमातुलः सुस्थोऽपि कथं पतित इति तत्रस्थानां क्रीडासक्तानां बालानां बुद्धेरविषय आसीत्। कदाचिन्मातुलो जिह्वालौल्यात् सुपक्वफल-लोभाच्छाखातः शाखाः परिसर्पन् पादस्खलनादधः पपात।

नायमासीदवसरो वितर्कस्य। बकमातुलः सर्वेषां प्रियोऽस्ति। अतः तत्कालमेव सः खट्वोपरि निधायोपचारार्थं ग्रामं नीतः। तत्रानुभूतसुल-भोपचारैः स नेत्रे उन्मील्योदतिष्ठत्। दैवाच्छरीरमक्षतमासीत्। केवल-माघातपीडा बाधते स्म। साप्यौषधिप्रभावेण कैश्चिद्दिवसैः दूरीभूता। ततश्च,

> प्रकृष्य कर्णौ हस्ताभ्यां कथयति स्म मातुलः।
> जिह्वालौल्यं परित्यक्तं नूनं प्राणविमर्दनम्॥
> पुनः कदापि वृक्षाणां पादं नैव हि नैव हि।
> मूर्ध्नि दास्यामि स्वप्नेऽपि यतो प्राणा मम प्रियाः॥

विचित्रानुभावोऽयं मातुलः। न केवलं कस्यचिदेकगृहस्य, न केवलं बालानामपि तु सर्वेषामेव मातुलः। आबालवृद्धाः नरनार्यः तं मातुल-संज्ञया सम्बोधयन्ति। वस्तुतः सः ग्राममातुलः एव। ग्रामस्य कस्मिन् गृहे

केन सह तस्य भगिनी निवेशितेति कोऽपि न जानाति किन्तु सः सर्वेभ्यो भागिनेयपदं प्रयुंक्ते। तस्य मूलं जन्मस्थानमद्यापि नास्ति विदितम्। मूलतः सोऽल्पे वयसि भिक्षुकरूपेणात्रागतवान् किन्तु ग्रामवासिनां स्नेहमधिगम्यास्य ग्रामस्यैवाभूत्। तदारभ्य प्रायेणात्रैव निवसति। सः सदैवास्मिन् ग्रामे उत्तरदिशः समागच्छति। प्रवेशात्पूर्वं ग्रामाद्बहिरेकस्मिन् स्थाने स्वलगुडं निक्षिप्यैकपादेन बक इव विनम्रशिरसा नेत्रे निमील्य तूष्णीं स्थित्वा किमपि ध्यात्वेव सहसा लगुडं प्रगृह्येतस्ततः दृष्टिनिक्षेपं विना ग्रामे प्रविश्य कस्यचिद् गृहद्वारं प्राप्य, "अयमहमागतोऽस्मीत्युच्चैर्नदति। ग्रामाद् बहिर्भागे तेन निर्मितां बकमुद्रां दर्शं दर्शं सर्वैः तस्याभिख्या 'बकमातुल' इति कृता। स यदापि ग्राममागच्छति बकमुद्रां विधायैव तत्र प्रविशति। तस्यायं शाश्वतो नियमः। अपि च गोचारणप्रसंगे बहुधा सः स्ववामचरणं पृष्ठभाग उत्थाप्य दक्षिणचरणं लगुडेनाश्लिष्य बकमुद्रां विदधाति। अतएवान्वर्थया बकमातुलसंज्ञया स नोद्विजते। बकमातुलो न कस्यचिद् गृहे नापि ग्रामे सुस्थिरतया निवसति। दिनकतिपयानन्तरं गृहमेकस्य परित्यज्य गृहमन्यस्य व्रजति। कदाचिद् ग्रामे मासमास्ते कदाचित्मासात्पूर्वमेव स्वलगुडमादाय निर्गच्छति। यथारुचि पुनरागच्छति। अनियता खलु तन्निवासवृत्तिः। तं प्रत्यासक्ता अपि जना अनासक्ता इवाचरन्ति। नास्ति कस्यचित् कोऽपि निर्बन्धो यत् सः ममैव गृहे वसतु, गृहमन्येषां न यातु। सः यस्यान्नं गृह्णाति लवणञ्चास्वादयति तस्य निष्कृतिमपि करोति। परन्तु न तिष्ठत्येकस्यैव भूत्वा। समभावेन सर्वेषामपि ग्रामवासिनां सुखदुःखयोस्सहभागी भवति। अतएव न कस्यापि भारभूतः। बकमातुलो यस्य गृहे निवसति तस्य सर्वं कार्यजातं यथाशक्ति कालानुसारं सम्पादयति। कोऽप्यपरिचितः तं दृष्ट्वा वक्तुं न शक्नोति यदयमस्य कुटुम्बस्य सदस्यो नास्ति। यथायोग्यं सर्वैं सह व्यवहरतो बकमातुलस्याबाधिता दिनचर्या तस्य स्वेदबिन्दुभी रसपेशला भवति। यथा हि सः प्रत्यूषे सर्वप्रथममुत्थाय गवादीन् आहारकर्मणि नियोज्य शौचाय सुदूरं क्षेत्रेषु गत्वा पुनरागत्य गृहे जलसम्भरणं द्वारभूमिमार्जनादिकं कर्म करोति। ततश्च स्नानं विधाय सविधि पूजनार्चनं विदधाति। यदि कृषिकर्मणि क्षेत्रेषु किमपि विधेयं वर्तते तर्हि तत्र गत्वा गृहस्वामिनः साहाय्यं प्रकुरुते। मध्याह्ने निवर्त्य भोजनं परिसमाप्य क्षणमात्रं विश्रम्य गृहाद् गृहं पर्यटति। अपराह्णे क्वचिद् गोचारणं करोति, कदापि गृहोपकरणानयनायापणं गच्छति वा यस्मिन्

कर्मणि विनियुज्यते तदेव सम्पादयति। सम्प्राप्ते सन्ध्याकाले लौकिकं कर्मशेषं विधाय ग्रामस्य पूर्वभागे स्थितं देवालयं गच्छति। तत्र दीपदान-पुरस्सरं देवतावन्दनं सम्पाद्य मन्दिरमण्डपसंलग्ने चत्वरे भजनमण्डली-मायोजयति। समवेतास्सर्वे जनाः लौकिकचिन्तां विस्मृत्य भक्तिरससागरे निमग्ना कस्मिंश्चिदलौकिकानन्दलोके विहरन्ति। अनिर्वचनीया स्वर-माधुरी बकमातुलस्य।ताललयबद्धेन सुमधुररागेण देवस्तुतीः श्रीराम-चरितमानसस्य विविधान् प्रसंगान् मुरजादिवाद्यस्निग्धगम्भीरध्वनि-संगतान् यदा सः गायति तदा काप्यमृतधारा कर्णकुहरं प्रविश्य हृदय-माप्याययति। भक्तिसंगीतगोष्ठीं विसर्ज्य गृहमागत्य रात्रिभोजनं कृत्वा शयनं भजत इतीयं दिनचर्या बकमातुलस्य।

यदाकदा मातुलेन सह हास्यप्रयोगोऽपि भवति। बालका ग्रामवीथीसु पर्यटन्तं बकमातुलमेकाकिनं दृष्ट्वा तं भृशमुद्वेजयन्ति। अवलोकनमात्रेण तमालक्ष्य बालकाः—"भोः मातुल! राधेश्याम-राधेश्यामेति" बारम्बार-मुच्चैरुच्चार्य पलायन्ते। बकमातुलोऽपि क्रोधमलीकमभिनयन्—तिष्ठत रे दुष्टाः! कथं सीतारामं विहाय राधेश्यामेति वदथ, सीतारामं भजतेति प्रहारमुद्रां नाटयन् तान् पलायनपरान् बालकान् सरसभमनुधावति। तदानीमेव पृष्ठतः कश्चिद् भित्तिगुप्तो बालः तमाकारयन् कथयति—"मातुल तुल-तुल, धावसि थुल-थुल।" तं प्रहर्तुं सहसा परावर्त्य मातुलो मिथ्याकोपेन नेत्रे विस्फारयन् प्रलपति—"दन्तुल-पन्तुल शयने छुल-छुल। तिष्ठ-तिष्ठ तव मुखभञ्जनं करोमि।" मातुल-बालकानामेवं बहुविधाः वृत्तान्ताः केवलं मनोरञ्जनार्था नान्याभिप्रायाः। बालाः करपुटवादन-पुरस्सरं हसन्ति मातुलोऽपि हास्यमुखमण्डितः यथाभिमतं गच्छति।

एकदा बकमातुलोऽपराह्णवेलायामन्यैर्ग्रामजनैस्सह ग्रामाद् दूरं गत्वा महिषीपृष्ठमारुह्य पशुचारणं करोति स्म। तत्र एको गोपबालको ग्रामम् आगत्य बाष्पावरुद्धकण्ठेन करुणस्वरेण बकमातुलस्य देहावसानवार्तां श्रावयामास। यैरपीयमसह्या वज्रपातनिभा दुर्वार्ता कर्णगोचरीकृता, ते सर्वेऽश्रुपूरितनयना विलपन्तो धावन्त एव यावत्तत्र गच्छन्ति तावद्दूरत एव श्वेतदुकूलाच्छादितं भूपृष्ठशयितं कृतदक्षिणदिक्चरणं स्तब्धं जनमेकं पश्यन्ति। यदा दुःखार्तैर्जनैः दुकूलमुद्घाटितं तदा तत्र मृत्तिकानिर्मिता भूशायिता पुरुषाकृतिर्दृष्टा। अन्योन्यमुखावेक्षणपूर्वकं सविस्मयं यावत्ते

बकमातुलाय दृष्टिनिक्षेपं कुर्वन्ति तावत्स विहसन् दूरस्थस्यैकस्य भूगर्तस्योपरि आगतवान्। "अहो जीवत्ययं तत्कथमनेन मृत्युवार्ता प्रेषिता ?" इति पृष्टे सति सः विहस्य न्यवेदयत्—"यदाऽहमत्रागतवान्, तदैव मम शिरसि काकः खगाधम उपविष्टः। एतदमंगलनिवारणार्थं लोकरीतिमनुसृत्य मयैषाऽशुभा मृत्युवार्ता भवत्सकाशं प्रेषिता।" इदमुपश्रुत्य सर्वे जनाः स्मितवदनास्तस्य दीर्घायुष्यं कामयमानास्ततो निवर्तिताः।

एवं गच्छत्सु दिवसेष्वेकदा निजद्वारे कूपचत्वरे प्रातःकाल उपविष्टोऽहं यावद्दन्तधावनं करोमि तावद् बकमातुलः आगत्य मामब्रवीत्—"भागिनेय, अद्य रात्रौ मयैकः स्वप्नो दृष्टः। तस्य फलं विचार्य कथय।" मया विहस्योक्तम्—"अहो मातुल! कीदृशः स्वप्नो दृष्टः ?" सोऽभाषत—"भगिनीसुत, श्रूयताम्—आकाशकुसुमहारालङ्कृतः कोऽपि विंशतिवर्षीयः कामोपमो वन्ध्यातनयः शशविषाणधनुषि शिरीषपुष्पाग्रबाणमारोप्य स्वकर्णपर्यन्तमाकृष्य मृगतृष्णाम्भसि स्नातां काञ्चिदष्टादशवर्षदेशीयां कन्यकां प्रहृत्य व्यापादयामास। मृताऽपि सा नवयौवना तं कुमारं स्वकटाक्षानुवलितरक्तनयनगुणपाशेन समाकृष्य, तेन सह जलदयानमारुह्य वेगेनोत्प्लुत्य क्वचित्प्रणुष्टा। अयमेव स्वप्नवृत्तान्त" इत्युक्त्वा तूष्णीको जातः। निशम्य च मन्दस्मितेन मया भणितम्—"मातुल शुभदोऽयं स्वप्नः। त्वं तु यावद्दिनमिच्छामोदकं रोमन्थसि। अचिरादेव तवोरसि काचित्कन्या वरमालां दास्यति।" "कथं मामुपहससि रे भागिनेय !" इति कुन्दकलिकाद्युतिदन्तावलीं प्रदर्शयन् बकमातुलः स्कन्धोपरि स्वलगुडं निक्षिप्य ग्रामपुष्करं प्रति प्रतस्थे।

ग्रामस्य नास्ति किंचित् पर्व, कोप्युत्सवः कश्चित् समारम्भः समारोहो वा यस्मिन् बकमातुलस्य सहभागित्वं न स्यात्। सः सर्वातिरिक्तेनोत्साहेन द्विगुणितेन प्रयत्नेन मनसा वचसा कायेन तेषु सदैवाग्रेऽग्रे भवति। मम ग्रामे परम्परया प्रतिवर्षं रामलीलाया आयोजनं भवति। ग्रामसाहाय्येन सम्पद्यमानायां तस्यां सीमितोपकरणैरपि युवजनाः साध्वभिनयं कुर्वन्ति। स्त्रीपात्रभूमिकासु कन्या एव पात्रीकृता भवन्ति। अस्मिन् वर्षे ग्रामस्य रामलीलायां रामस्य चरितमभिनेतुं बकमातुलः सञ्जीकृतः। मत्परामर्शेणायोजकैः सर्वेषां ग्रामीणानामनुमोदनं गृहीत्वैकोऽभिनवप्रयोगोऽपि

कृतः। सीताभूमिकायां स्थितायाः कन्यायाः विवाहः रामलीलायाः धनुर्भङ्गप्रसंगे गृहीतरामभूमिकेन बकमातुलेनाभिनयमात्रं नाभूदपितु यथार्थ एव। एवमियं रामलीला चिरस्मरणीया न विस्मरणीयाऽतिरमणीयाऽनुकरणीया बभूव।

अनेन विधिना बकमातुलः सभार्यः सञ्जातः। यथा रसालः नवमालिकया संगतः शोभते तथैवाऽभिख्या मातुलस्य। मासपर्यन्तं सः श्वसुरगृहमलङ्चकार। तत्पश्चात् सर्वेषां सहयोगेन गृहमेकं निर्माय ताभ्यां समर्पितं यतः सः गृहस्थः स्यात्। ग्रामप्रधानेनाऽपि ग्रामसमाजस्य कृषियोग्यानि भूखण्डानि कुटुम्बभरणाय पर्याप्तान्नोत्पादकानि तन्नाम्नालेख्य तस्मै प्रदत्तानि। शनैश्शनैः तस्य बकमातुलसंज्ञा सगयोदरे विलीयमानाऽस्ते। तस्य कर्मनिष्ठा, सेवावृत्तिः, परोपकारभावना त्वक्षुण्णैवापितु दिनानुदिनं वर्धत एव। तस्य प्रियत्वे सम्बन्धमाधुर्यमपि मिश्रितम्। एवं बकमातुलः इदानीं ग्रामजामातृरूपेण सर्वेषामादरप्रेमपात्रीभूतः स्वजायया सह तत्र ससुखं निवसति।

नियतेरनियतं विधानं को ज्ञातुमर्हति? एकदा दरिद्रबालभिक्षुकरूपेणास्मिन् ग्रामे समागतः बकमातुलः सर्वेषां स्नेहमवाप्य पुनश्च ग्रामजामातृरूपेण प्रतिष्ठितो भविष्यतीति को जानाति स्म? अतोऽहं ब्रवीमि—

सरहस्यकः कालोऽयं नियतिश्च विलक्षणा।
द्वाभ्यां क्रियते जगतो यथास्वं परिवर्तनम्॥
सर्वसेवाप्रसन्नात्मा भक्त्युत्साहसमन्वितः।
क्लेशेन लभते लोके यथायं बकमातुलः॥

बकमातुलचारुतमं चरितं
प्रभुपावनप्रेममयं रुचिरम्।
जनरंजनवृत्तमिदं कलितं
समयेन समं मधुरं भणितम्॥

: ६ :

## अथेतिपण्डितः

अस्त्युत्तरस्यां दिशि गोमतीतीरे गोधनो नाम ग्रामः। तत्र नियतसंख्या अप्यनियतसंख्याः, एकवर्णा अप्यनेकवर्णा जनाः निवसन्ति। तस्मिन्नेवैकः पौरोहित्यकर्मजीविकोऽन्धविश्वस्तकर्मकाण्डानुरक्तो ज्ञानलवदुर्विदग्धः पाखण्डाचारदक्षः कुटिलाशयकर्मकः, सदक्षिणोऽप्यदक्षिणः कुशलोऽप्यकुशलः, शनैश्चरोऽप्यशनैश्चरः सपदक्रमोऽप्यपदक्रमः ससूत्रोऽप्यसूत्रः सदण्डोऽप्यदण्डः : कटुकोटिजल्पकोऽप्यहम्मन्यो ब्राह्मणः प्रतिवसति। लोकस्तमथेतिपण्डित इत्युपाधिना विभूषयति यतो हि सः बहुधा स्वीये निरर्गलालापे वाक्यारम्भे अन्ते च 'अथ' 'इति' शब्दद्वयमवश्यमेव योजयति। कालान्तरे व्याकरणे आदेशसूत्रवदयमुपाधिः तस्य नामलोपं चकार। स्वजन्मग्रहणकृतार्थीकृते तस्मिन् ग्रामे स हरितसस्यग्रसननिरतोऽबाधितो वृषभ इव, निरस्तपादपे देशे एरण्डवृक्ष इव, मासेषु ज्येष्ठ इव, रागेषु काल इव, द्रव्येषु पाषाण इव, विहगेषु काक इव, पशुषु शृगाल इव, सरीसृपेषु सर्प इव, दंशकेषु वृश्चिक इव, जलचरेषु जलौकेव, ग्रहेषु राहुरिव, पुष्पेषु किंशुक इव, फलेषु तिक्तालाबुकेव, धूर्तेषु नापित इव, रोगेषु सन्निपात इव, आर्द्रेषु पङ्क इव, शुष्केषु काष्ठमिव, पात्रेषु घटखर्पर इव, अन्धेषु काण इव, रूपकेषु भाण इव, रसेषु बीभत्स इव, काव्येषु दोष इव, पुरुषार्थेषु काम इव निरर्थकेष्वजागलकम्बल इव विराजते।

ग्रामवीथीषु पर्यटतोऽथेतिपण्डितस्य काप्यपूर्वा शोभा भवति। धृतकाष्ठकण्ठमालां वामनीं गामनुधावन् सः स्वगत्या मण्डूकप्लुतिमपि तिरस्करोति। तमवलोक्य विधेर्निमाणविधिं रचनाचातुरीं पञ्चीकरणप्रपञ्चकौशलं सामग्रीसमाहरणायासं निष्पादनोपकरणविविधतां वैचित्र्योत्पादनव्यग्रतां विमृश्य भृशं विस्मयो जायते। यतो हि जठरजननजरठेन पितामहेनाथेतिपण्डितस्य पञ्चमहाभूतोपकरणे करणविकले बन्धशिथिले कलेवरे खर्वे ते सर्वे भूतविशेषास्तथैकत्रीकृता यथा तल्लौकिकमप्यलौकिकं प्रतीयते यथा खलु ग्रीवा मण्डूकात्, कपोलौ नारिकेलफलत्वचः, नासिका शुकशावकचञ्च्वोः रदनपङ्क्तिः मूषकदन्तावल्याः, नेत्रे उलूकनयनाभ्यां केशकलापं शणात्, वक्षःस्थलं पाषाणात्, उदरं कूष्माण्डात्, पादौ विदूषक-

वक्रलगुडात्, करौ वेतसात्, शरीरकान्तिश्च कज्जलराशेरुद्धृत्योद्धृत्य तदङ्गानि निर्माय विधाताऽपि कृतश्रमोऽभवत् ।

अथेतिपण्डितो महति जनसम्मर्देऽपि स्वानुभावेन दूरादेव विभाव्यते । श्वेतोष्णीषमण्डितशिरः प्रगाढचन्दनर्चचितभालं निभालयन्ति जनाः ताम्बूलरागरञ्जिताधरोष्ठं शलाकाञ्जनराजिराजितनेत्रमामलकस्थूलाक्षमालावेष्टितग्रीवं कञ्चुकगलप्रान्तान्निर्गत्येषल्लम्बितयज्ञोपवीतसूत्रं स्कन्धोपरिनिविष्टकौशेयोत्तरीयपट्टिकं पीतधातुमण्डिततैलसिक्तचिक्कणवेत्रदण्डपाणिमनवरतनासाचूर्णघ्राणनप्रयोगपीतश्मश्रु सततताम्बूलचर्वणनिःसृतरागबिन्दुच्छुरितपरिधानं पादवैषम्यादनियतगतिकं विभक्तवंशखण्डशब्दानुकारिकण्ठध्वनिमुन्नतावनतकनीनिकावशात्तिर्यग्दृष्टिनिक्षेपं तं महता कौतुकभयसंशयादरेण । निदाघदिवसेषु चक्रवातस्तम्भमिवापतन्तं तं सहसा निरीक्ष्य मनसा तन्नाम प्रदूष्य सर्व एव ग्रामवासिनो वचसा शिरसा प्रणम्य तस्माद् विचित्राण्याशीर्वचांसि प्राप्नुवन्ति । न कदापि स महात्मा कस्मैश्चिन्मङ्गलाशिषं वितनोति । यथा हि—अथ लवणेन शुष्करोटिकामास्वादयेति । अथ वत्स तक्रेणौदनं भुङ्क्ष्वेति । भोः रासभयानो भव । वज्रचणकचर्वणभग्नदन्तो भव । भूरिसन्ततिरोदनकोलाहलबधिरो भव । परधनचाकचक्यनयनान्धो भव । आजीविकान्वेषणाय विदेशं गत्वा वधूविरहशप्तो भव । लोभेनेर्ष्यालाभं कुरु । अथ कुटुम्बिनस्ते स्वस्था भवन्त्विति । तस्याशीर्वचोभिरभिभूता जनास्तं महाब्राह्मण इत्याकारयन्ति ।

श्रूयते तस्य पितृचरणानां महती प्रतिष्ठा यवनपुरपण्डितेषु । विद्वद्गोष्ठीषु स वाग्देवतावतार इव पूजितो भवति स्म । न केवलं सरस्वत्याः लक्ष्म्याः अपि कृपापात्रमासीत् । किन्तु दुर्दैवेन स्वर्णे काठिन्यमिव, शशिनि कलङ्क इव, पुष्पेषु कण्टकमिव, मणिषु ग्रहदोष इव तस्य देहयष्टावष्टावक्रता घटिता । अतो हि नानुप्रविष्टः कस्मिंश्चिदपि कामिनीमनसि । कदाचिच्छास्त्रार्थप्रसंगेन राजसभायां गतस्य महापण्डितस्य दृष्टी राजनर्तक्यास्त्रिवलीग्रन्थिग्रथिता बभूव । राजप्रसादेन राजप्रासाद एव तौ परिणीतौ जातौ । तयोरयमत्रिजात इवैकपुत्रो वंशानुरक्षकः समुत्पन्नः । पितृभ्यां महताऽऽयासेन कृतसवर्णोऽप्येषः पितृज्ञानलवमपि नाप्तवान् किन्तु चन्दनपङ्कगन्ध इव विद्यावासितोऽभूत । पितुःपुण्यप्रभावेण ज्ञानस्य दुस्तराम्भोधावथेतिपण्डितस्य जिह्वाप्लवनचापलं यजमानानां श्रद्धापूरितमानसमो-

दायैव भवति। कालप्रभावेण पितृवियोगखिन्नमानसः सः कुलक्रमागतां पुरोहितवृत्तिं स्वीचकार।

एकदा कस्यचिच्छ्रेष्ठिनो यजमानस्य भार्यया प्रक्षिप्तेन दण्डेन काचिन्मार्जारी व्यापादिता। मार्जारीहत्या महत्पापकारिणी भवतीति प्रायश्चित्तबुद्धिः सा श्रेष्ठिभार्या स्वकृतपापापाकरणाय पुरोहितमथेतिपण्डितं शरणं गतवती। पूजोपविष्टोऽथेतिपण्डितः तां दूरादेव वीक्ष्य, सम्पन्ना यजमानपत्नी समागच्छति, शुभदोऽयं दिवस इति विचार्य नेत्रे निमील्य त्वरितकरगताक्षमालान्दोलनपूर्वकमलीकध्यानमग्नो बभूव। सा त्वागत्य दूरत एव भुवि शिर आनमय्य तस्मै प्रणाममकरोत्। अथेतिपण्डितोऽपि नेत्रे उन्मील्य मिथ्याकोपं प्रदर्शयन् प्राह—"अथ पूजावेलायामत्रागमनस्य किमसह्यं प्रयोजनमिति। अथ किं लप्स्यते त्वया मे पूजाभङ्गेनेति? अथ तव प्रवृत्तिरधोरैव न किञ्चित्क्षणविलम्बसहमानेति। तत्कथय कथमत्र विस्मरणेन वा दिग्भ्रान्त्या वा निद्रोत्थितचलनेन वा प्राप्तवती भवतीति।" सा श्रेष्ठिजाया तस्य वज्रप्रहारनिभां वाणीं श्रुत्वा भृशं त्रस्ताऽपि पुनस्संत्रस्ता। भयवशाद् तस्याः कण्ठात्ररोधो जातः। केवलमश्रुजलपूरितनयनाञ्जलिं बद्ध्वाऽधोमुखीभूय जडेव, मूकेव, बधिरेव, ग्रहग्रस्तेव, परवशेव, विवशेव, लुठितेव, स्थाणुमूलेव, विमूढेव निश्शब्दा स्थितासीत्। ततस्तत्पश्चाद्वर्तिनी तस्या गृहदासी प्रणतिपुरस्सरं विनिवेदितवती—"महाराज, स्वामिनीयं मे श्रेष्ठिप्रवरस्य श्रीमल्लक्ष्मीदत्तस्य धर्मपत्नी। अद्य प्रातः महानसे स्थिताया अस्या दण्डक्षेपेणैका मार्जारी विगतजीवनलक्षणा जाता। अतस्तस्य पापस्यापनोदनोपायप्रकारं ज्ञातुमेषा दुर्दैवहतागतवती त्वच्छरणम्। कृपयादिशतु प्रायश्चित्तविधिमस्यै यतो ह्ययं विगतकल्मषा भवेत्।"

एतच्छ्रुत्वा प्रमुदितमनसा शिरःकम्पपूर्वकं देवमुखजिह्वागतोत्फुल्लरोटिकेवोच्छ्वसितोऽथेतिपण्डितः कृत्रिमचिन्ताभावेन गम्भीरमुद्रां धारयन् जगाद—"महानयमनर्थः। अथोदारमनसो लक्ष्मीदत्तस्य भार्या क्रूरकर्त्री भविष्यतीति स्वप्नेऽपि मया न शङ्कितम्। यः प्रातरेवोत्थाय भूमौ विवरमन्विष्य पिपिलिकाः भोजयति तस्यैव पत्नी हिंसामाचरतीति को विश्वसिति? किन्तु प्रारब्धमपाकर्तुं न कोऽपि प्रभवति। अथ मार्जारीहत्यया घोरकुम्भीपाकनरकं गच्छति जन इति शास्त्रेषु कथितम्। तत्कुटुम्बेऽपि पापच्छायैकादशवर्षपर्यन्तं सञ्चरति। प्रायश्चित्तविधौ प्रतिदिनं गरुडपुराण-

श्रवणपूर्वकमेकादशब्राह्मणेभ्यो भोजनवस्त्रालङ्कारदानं निर्दिष्टम्। एवं कुर्वन्नेकादशे दिवसे पुरोहिताय मृतमार्जारीभारतुल्यं स्वर्णपिण्डं श्रद्धया देयं भवति।" अथानेन प्रकारेणायं धूर्तपण्डितो मदीया सम्पदपहर्तु-मिच्छतीति विमृश्य सा श्रेष्ठिभार्या कथंकथमपि सानुनयमुवाच—"महाराज, अस्ति कश्चिन्नान्यः सुकरोपायः ? अस्मिन्दुर्वहोपाये नास्ति मे शक्तिः।"

अस्मिन्नेवान्तरे श्रेष्ठिप्रेषितः सेवको ढोढे नामोपस्थितः। "अथ कथमायात" इत्यथेतिपण्डितेन पृष्टे सति सः न्यवेदयत्—"भगवन्, अद्य प्रातर्भ्रमणाय निर्गतस्य स्वामिनः श्रीलक्ष्मीदत्तस्य मार्गमेका मार्जारी वामतोऽतिक्रम्य प्रणष्टा। स्वामी त्वमङ्गलशंकया प्रतिनिवृत्य चतुश्शाले तिष्ठति। तेनाहं भवत्सकाशं प्रेषितोऽमङ्गलनिवारणोपायं प्रष्टुम्। तदावेदय यदपि करणीयम्।" ढोढेसेवकमुखाद् भर्त्रा सह दुर्घटितमुपश्रुत्य श्रेष्ठि-वल्लभा, "अहो खलु दुर्दिनम्। वामा हि दैववृत्तय" इत्युच्चार्य सकरुणमुच्चैः रुरोद। अथेतिपण्डितस्तु सेवकस्य ढोढे नाम विज्ञाय कदाचित्पुरा कर्णकुहरे प्रविष्टं पाणिनिसूत्रं सस्मार 'ढोढे लोपः' इति। सखेदं निःश्वस्य प्राह—"अथ नेयं मार्जारी, भाविभीषणविपत्सूचिका। 'ढोढे लोपः' सूत्रानुसारं विचार्य वार्ताहरनामगणनया निश्चिनोमि यदागामिकाले श्रेष्ठिनः कुलधन-योर्लोप आसन्नः। अतएव महदनुष्ठानं विधेयं भविष्यतीति।"

ढोढे सेवकः प्रणम्य निर्गतः किन्तु श्रेष्ठिभार्या तथैव तस्थौ। सहसाऽथे-तिपण्डितस्य गृहिणी गृहान्निर्गत्य भग्नकांस्यपात्रझंकृतेन स्वरेण तं सम्बोध्य प्रलपितवती—"किन्न शृणोसि। पश्य कुकृत्यं सुपुत्रस्य, येन गृहमार्जारी कन्दुकक्षेपेण परलोकं प्रापिता। कथं दारुणमनुष्ठितम्! ब्रूहि पापस्यास्य किं भविष्यति ?" तदैव तस्य सन्तोषनामा पुत्रः समागत्य पितरं प्रोवाच—"कन्दुकक्रीडाभ्यासे क्षेपणकाले सहसैव सा मार्जारी पतिता तदाघातेन गतप्राणा चाभूत्। कोऽत्र मे दोषः ?" सर्वमिदं विज्ञाय सस्मितं पण्डिते-नोक्तम्—"अथ सत्यं ब्रवीषि, नास्ति ते दोषः न च भवसि मार्जारीहनन-पापभाक्। अपितु ब्राह्मणपुत्रहस्तेन व्यापादितायाः तस्याः मुक्तिरेव सम्भाव्या। उक्तञ्च शास्त्रेषु—

> "अथेति काचिन्मार्जारी मृता सन्तोषक्रीडनात्।
> न दृश्यते क्वचिद्दोषः सा मुक्ता वा दिवंगता॥
> विद्यतेऽत्र विधिस्सम्यग् यदि स्यात्पापसंशयः।
> सन्तोषं पाययेत्क्षीरं मार्जारीभारसंहितम्॥"

अथेतिपण्डितस्य कपटवचनं निशम्य तस्य बकवृत्तिं परिज्ञाय सा श्रेष्ठि-भार्या प्रायश्चित्तानुष्ठानं निषिध्य स्वगृहं गता। सुमांसला मत्स्यी वञ्चना-पाशे निपतिताऽपि हस्तादपसृतेति सम्प्रधार्याथेतिपण्डितः भृशं चुकोप। ततश्च स्वभार्याया अधीरतायै तां फूत्कर्तुमारेभे। पुनश्च तस्याः मातृ-गृहपलायनं संस्मृत्य स्वयमेव विरराम।

संज्ञास्वरूपवृत्तान्तं धूर्तपण्डितवञ्चनम्।
लोकार्थं हि मयाख्यातं धर्मार्थञ्चानुरञ्जनम्॥
सन्ति मूढान्धविश्वासा लक्ष्मीवाहनसज्जनाः।
येषां ग्रन्थिविभेदेन बकधर्मास्सुतुन्दिलाः॥
अथेतिपण्डिताख्यानं सद्धर्मनयनाञ्जनम्।
प्रभुप्रसादं प्राप्यैवं दृष्टिदोषः प्रमृज्यताम्॥

## यौतुककौतुकम्

पुरा कदाचिदाकाशमार्गेण पर्यटता देवर्षिणा नारदेनावलोकितं कन्यकायुगलं कालदूताभ्यां पाशेन वद्ध्वा नीयमानम् । लावण्यस्य निस्यन्दमिव, तारुण्यस्य हृदयमिव, कारुण्यस्य निचयमिव, वेदनावृक्षस्यैकवृन्तगतफलद्वयमिव, पीडापादपस्यालवालमिव नयनजलसिक्तं, भीतिलतिकाप्ररोहमिव, भयचकितमृगीनयनयुगलमिव कृतबहिरवस्थानं, वायुविच्छिन्नमाकाशगंगातरंगयुगलमिव, हिमदग्धं कमलिनीमुकुलमिव, अस्पृष्टचन्द्रकरकुमुदिनीकुड्मलमिव तत्कन्यकाद्वयं दर्शं दर्शं विस्मृतवीणावादनः स देवर्षिरचिन्तयत्--"नूनमत्र काचिद्विधिविडम्बना यतो ह्यकाले कालपाशे पतिते कन्यके दृश्येते । भवतु, पृच्छाम्येनं कालदूतमिति विनिश्चित्य यावदुपसर्पति तावत्तौ गृहीतकन्यकौ कालगृहे प्रविष्टौ । तावनुधावन्नारदोऽप्यन्तकप्रासादप्राकारं विलंघ्य सहसैव धर्मराजसाम्मुख्यमभजत् । प्रीत्याश्चर्यविस्फारितनेत्रो यमराजो देवर्षिं सत्कृत्य सप्रश्रयं तस्यागमनकारणमपृच्छत् । नारदमुखाज्जिज्ञासावचनमुपश्रुत्य स्मितवदनः सः प्राह—"महामुने, किं कथयामि । कलङ्किता खलु मानवजातिः । प्रतिदिनमेव सहस्राधिकाः नवोढाऽनूढाः विवशाः प्रातःकुन्दप्रसवशिथिलजीविताः प्राप्ताः भवन्त्यत्र । आसामपगतिकारणं हि यौतुकम् । यौतुकलुब्धास्स्वार्थान्धाः धनपशवो नराः निष्करुणाः स्वहस्तैः प्राणान्नपहरन्त्येतादृशान्मामुपहरन्ति च । इदानीं भारतभूरेभिः दुष्कृतैः भृशं कम्प्यते । एते अपि कन्यके तद्यौतुकराक्षसभयपलायिते मम शरणापन्ने । वेदाभ्यासजडः पितामहोऽपि कथं रूपगुणसम्पन्नां कन्यां निर्धनगृहाय समर्पयति नाहं वेद्मि । अनयोरप्ययमेव वृत्तान्तः । निर्धनतयाऽनयोः पिता सुमहदुद्योगं कृत्वाऽपि यदा स्वाभिमतं गृहं वरञ्च नाप्तवान् तदा तद्दुर्दशामसहमाने परिणययौवने एते कन्यके तन्नैराश्यनिरसनाय सर्वथा विनिश्चित्य गलबन्धपूर्वकं स्वप्राणान् मुमुचतुः ।" निर्धनकुलानामुपरि भीषणयौतुकक्रकचापातनादं निशम्य दयालुः देवर्षिः विरक्तोऽपि रक्तनयनः सोच्छ्वसितं शुशोच—

"दरिद्रस्य गृहे कन्या जाताऽपि शुभलक्षणा ।
कां गतिं दुरवाप्नोति दृष्टमद्य मया स्वयम् ॥

यद्येताः दण्डभागिन्यो यौतुकार्पणप्राणकाः ।
भविता किं पुनस्तेषां ये हि यौतुकदानवाः ॥"

स्वचित्तक्षोभापनोदनोपायं नारायणदर्शनं कर्तुं सः क्षीरसागरं प्रति प्रतस्थे । तत्राशु गत्वा भगवन्तं शेषशायिनं सलक्ष्मीकं पद्मनाभं विष्णुं ददर्श । "अहो देवर्षे, बहुकालान्तरं प्राप्तोऽसि । अपि धर्मवृद्धिर्जायते । कच्चित्कुशलिनी प्रजा । सम्पन्नशान्ता मही ।" एवम् अन्यान्यपि नारायणवचांसि श्रावं-श्रावं नारदः प्रोवाच—"प्रभो, यस्यां भुवि भवान् धर्मरक्षणायावतरति सैव मही यौतुकत्रासेनाधुना विक्षुब्धा वर्तते । असंख्याकाः कन्यकाः यौतुकदानवैः भृशं पीडिताः नित्यमेव स्वप्राणाहुतिं वितरन्ति । आर्यावर्ते भरतखण्डे शोणितपिपासिता यौतुकलीलापिशाचिनी नग्ना नृत्यति । यौतुकलिप्सया मानवास्तथा निष्ठुरमाचरन्ति यथा शोणितजिह्वाः हिंसकाः पशवोऽपि नैव कुर्वन्ति । ये कन्यकानां पितरस्तेषां दुर्दशा त्वनिर्वचनीया । यथा अग्नितप्तो लौहः मार्दवं भजते तथैव कन्यासुखाकांक्षया तेषां हृदयमपि सकरुणं दीनं भवति । वरकुटुम्बिनो रक्तबीजमिव काचिन्नवानवा यौतुकाकांक्षा स्फुरति । यथा हविःप्रदानेन वह्निज्वाला भूयो भूयोऽभिवर्धते तथैव प्रतियौतुकपूरणेन यौतुकलोभिनो जनस्य लौल्यं सुरसामुखत्वं भजते । महर्घता नित्यनूतना वैज्ञानिकाविष्काराश्च कन्यापितृशिरसि वज्रपातनिभाः प्रतिफलन्ति । मयाऽद्यैवैतद्दुर्वृत्तं दृष्टं श्रुतञ्च । मे मनसि महान् खेदः समुपजायते । अहो कथं जीवन्तु कन्यकाः !"

देवर्षिवचनं श्रुत्वा नारायणो दीर्घमुष्णञ्च निःश्वस्य प्राह—"अस्त्येवम् । भारतवर्षे ईदृशी कुवृत्तिः श्रूयते । तत्र दैवीसम्पदपक्षीयते आसुरीसम्पदभिवर्धते च । एताश्चान्याश्च सामाजिककुरीतयो मनसो विकाराश्च प्रादुर्भवन्ति यदा जनानामीश्वरेऽनास्था, धर्मस्य ह्रासः, नैतिकतायाः लोपः, मर्यादाविधेः नाशः, विवेकस्याभावः स्वार्थपरा बुद्धिश्च जायते । परोपदेशकुशलो जन आदर्शमुपदिशति स्वयं नैवाचरति । अधुना भारतवर्षे समाजे राजनीतौ चैतादृशाः बहुलालापाः द्विजिह्वाः जना नेतृत्वं विदधाति । अतएव बहुशो यतमानेऽपीयं दुष्प्रवृत्तिः न विरमति । यदि भवते रोचते, द्रष्टुमिच्छामि तत्र किमपि यौतुकघटितम् ।"

नारदस्तु तत्रैव वीणां कमण्डलुञ्च निधाय नारायणेन समं कृतविप्रवेषः यौतुककौतुकदर्शनाय प्रचलितवान् । अपश्यच्चाम्बरस्थैवैकं सुविहितं

लक्ष्मीकृतप्रसादं प्रासादमतिविस्तृतसौधम्। तत्राजिरे कयाचित्प्रौढया मुष्टिगृहीतकचपल्लवा साश्रुनयना विवर्णवदना शरविद्धमृगीवाकुला सुन्दरी तप्तकाञ्चनावदातवर्णा युवतिः स्वपतिना भृशं ताड्यमाना ताभ्यामवलोकिता। दयार्द्रेण करुणानिधिना तत्रोपसृत्य तस्याः प्राणरक्षा कृता। निरुद्धद्वारे प्रासादे कथं कोऽपि प्रविष्ट इति देवदूतशंकया सा प्रौढा सविस्मयमानसा भीता जाता। स्वयमेव युवतिकेशपाशं विमुच्य स्वपुत्रं प्रहर्तुं निषेधितवती। नारदोऽपि तत्रोपसृत्य प्रोवाच—"प्रतिज्ञात-यौतुकधनोपहारस्यापूर्णताप्रतीकारवशादेवेयं दुर्दशा क्रियतेऽस्याः युवत्याः। अहो क्रूरता! स्त्र्येव शत्रुः स्त्रीणाम्। महतीयं विडम्बना यदेताः स्त्रियो मातृरूपेण स्वकन्यकानां सुखं वाञ्छन्ति किन्तु श्वश्रूरूपेण स्वपुत्रवधूः भृशं पीडयन्ति।" नारायणेनोक्तम्—"देवि! अपसारय दुर्मतिम्। कन्या-तुल्यं मानयतु पुत्रवधूमन्यथा ते सर्वं विनश्यति।"

अथ तौ यावदग्रे प्रचलतः तावन्महज्जनसम्मर्दः पलायमानो दृष्टः। वस्त्रालङ्कारभूषितास्ते समस्तास्त्रस्ताः व्यस्ताश्च वडवानलेन विक्षुब्धाः मत्स्या इव भयपलायमाना इतस्ततः समविषमभूमिमविचिन्त्य निजप्राण-त्राणाय ज्याबलेन धनुःक्षिप्ता मार्गणा इव मार्गमन्विष्यमाणाः वेगोत्फुल्ल-गत्या तप्तलौहसंस्पृष्टचरणा इव पादानुत्क्षिप्यमाणाः जनाः अहमहमिकया स्वल्पकाले सुदूरं गन्तुं वाञ्छन्ति स्म। न कश्चित् कस्यचिच्छृणोति। केषांचिदुपानहो विभ्रष्टाः, केषांचिदधोवस्त्राणि स्खलितानि, केषांचिदुत्त-रीयं प्रणष्टम्, कस्यचिदुष्णीषोऽपगतः। महति रजःसागरोदरे प्रविष्टाः दुरवस्थां गतास्ते सर्वे चीत्कारपूर्वकं यौतुकलोभिनं वरपितरं दूषयन्ति स्म। किमेतदिति विस्मितमानसौ तौ यावत्तत्र गच्छतः तावद् यौतुकलीला-मुपश्रुत्य रोमाञ्चितौ जातौ। विवाहमण्डप एव वरपिताऽपूर्वं विधिमाश्रित्य सिन्दूरदानसमये वराय स्वर्णमयं कण्ठाभूषणं तन्मूल्यतुल्यं द्रव्यं वा समर्पितुं निर्दिष्टवान्। कथं तत्काल एवेदं सम्भवमिति कन्यापक्षेण सानुनयं सः कथं कथमपि प्रसादितः। किन्त्वद्य वराहारसमये पुनः सः तमेव निर्बन्धं निर्बबन्ध। कौतुकलोभिनस्तस्य दुराग्रहेण खिन्नाः क्रुद्धाश्च कन्यापक्षिणो जनाः यष्टिकाः आदाय तं प्रहर्तुमारब्धवन्तः। न केवलं वरपिता त्वन्ये वरयात्रिणोऽप्याहताः। एवमेते सर्वे मंगला-मोदावसरे दुर्गतिं प्राप्तवन्तः। अहो यौतुकलीलेति सास्मितौ तौ गतवन्तावन्यत्र।

कस्मिंश्चिदन्ये ग्रामे प्रविश्य तौ वरयात्राजनवासमपश्यताम्। द्वार-पूजायै प्रस्थातुकामाः सर्वे सुसज्जिता वरयात्रिणः उत्फुल्लमानसाः स्निग्धनेत्राः ताम्बूलरागरंजितौष्ठाः ललितललाटिकालसितभालाः तदा स्तब्धाः बभूवतुः यदा सहसैव प्रस्थानमङ्गलवाद्यध्वनिर्लोपं गतः। सोत्सुकनेत्रा यावद्वीक्षन्ति तावत्कन्यापितरं वरपितुश्चरणयोः पतितं पश्यन्ति। आः कथं किमभूदिति नारदनारायणौ त्वरितपादौ तत्र गतवन्तौ। वरस्य पिता तारस्वरेण घोषयति स्म—"असम्भवोऽयं विवाहः। यद्यवशिष्टं धनं मह्यं न प्रयच्छसि, द्वारपूजायाः वार्तैव का! दृष्टिनिक्षेपमपि न करिष्यामि तव द्वारदिशि। अपनयन्तु सर्वां सज्जां, निवर्तयन्तु सर्वे।" कन्यापिता तु—"मैवं समधी मैवम्। मे मर्यादा, ज्ञातिगौरवं तवैव हस्ते। सदयं विचारय, कोपं निवारय, तव शरणागतोऽस्मि। को दोषो मे कन्यायाः? प्रसीदतु भवान्, त्वद्वचनमवश्यमेव करिष्यामि।" किन्तु क्रूरः वरपिता मनागपि कर्णौ न दत्तवान्। अहो सङ्कटापन्नो वराक इति विमृश्य नारायणः स्वयं ग्रामणीवेषेनागत्य वाञ्छितधनादधिकं तद्धस्ते समर्प्य धिक्कृतिपूर्वकं ततः देवर्षिद्वितीयः प्राचलत्।

मार्गमतिक्रामयता नारायणेन प्रोक्तं—"देवर्षे! विषमा खलु स्थितिः। विवाहं पवित्रं संस्कारं दूषयन्ति यौतुकमलेन भारतीयाः जनाः। अनायासं भौतिकवैभवसम्पन्नतामवाप्तुं जनाः विकृतमत्ता इव पैशाचवृत्तिं पोषयन्ति परपक्षस्य दुःखं दैन्यं विवशतामविचार्य प्रभूतयौतुकलोभेन। स्वेच्छया पुण्याय दीयमानं कन्याधनं वरपक्षोऽधुना सामाजिकप्रतिष्ठया सह संबद्ध्य केवलं स्वार्थपूर्तये निर्बन्धेन कन्यापक्षतोऽधिकाधिकमपहरति। रक्तबीजोपमाः यौतुकलुब्धाः जायन्ते गृहे-गृहे।" देवर्षिस्तु यावत्किमपि कथयति तावत्समक्षमापतन्तं वाहनसमूहमपश्यत्। तेषु वाहनेषु वधूसनाथा वरयात्रा यौतुकोपहारा प्रभूतां सम्पच्चासीत्। तानतिक्रम्य तौ विश्रमायैकस्यां वाटिकायां गतवन्तौ दृष्टवन्तौ च सपत्नीकमेकं प्रवयसं पुरुषम्। अश्रुकलुषितवदनं खिन्नमानसं तं पुरुषमुपगम्य नारायणोऽपृच्छत्-"कथमिमां दशां प्राप्तवानसि?" सोऽपि सोच्छ्वासम्—"किं करिष्यति भवान्? सुखदुःखयोर्दोलाधिरूढोऽहम्। अद्य मे कन्या स्वपतिगृहं गतवती। तस्याः सद्योवियोगेनावां भृशं पीडितौ स्वः। किन्तु चिन्ता-

मुक्तावावामिति हृदि परितोषः। अनन्या सन्ततिर्मे कन्येति विचार्य तज्जीवनसुखाय वरकुटुम्बिनां सर्वाभिलाषपूरणाय मया स्वभूमिं विक्रीय ऋणमपि कृत्वा प्रचुरं यौतुकं प्रदत्तमि" त्यभिधाय तूष्णीको जातः।

नारायणस्तु स्वशिरसि हस्तौ विन्यस्य देवर्षिणा सह यौतुककौतुकमनुभूय तन्निवारणोपायं विचारयन् तत्र कश्चित् कालं तस्थौ। देवर्षिरब्रवीत्—"प्रभो, अचिन्त्या हि यौतुकलीला—

एको ददाति सर्वस्वमपरो नैव तुष्यति।
क्वचिदश्रु क्वचिद्धासः पश्य यौतुककौतुकम्॥
कन्यकाभक्षको जातः क्रूरो यौतुकदानवः।
कर्णनेत्रविहीनोऽयं न शृणोति न पश्यति॥
यदि ते रोचते भक्तिः साधुरक्षाव्रतं स्मृतम्।
हत्वैनं दानवं दुष्टं भूकलङ्कः प्रमृज्यताम्॥"

●

## प्रतिवेशी

"स्वागतं स्वागतम्, अपि कुशलिनो भवन्तः ? जानामि, जानामि समागता भवन्तोऽस्मिन् गृहे।" यावदहं किमपि कथयामि तावत्सः पुनरेव स्वयंचालितध्वनियन्त्रमिव मम कर्णकुहरं स्वस्निग्धमृदुस्वरेण पूरयामास—"अहो! महत्सौभाग्यमस्माकं वसतेरपि चास्याः यद् भवादृशो विभूतयः कृपयाऽत्रावासं कर्तुं प्रसीदन्ति। भवतामागमनेनेयं वसतिः मरुस्थले हरितोद्यानमिव संवृत्ता। ह्यः सायंकाल एव द्वारप्रान्तेऽवलम्बितं भवतां नामपट्टमालोक्याद्य साक्षाच्छुभदर्शनं प्राप्यात्मानं बहु मानयामि। भवन्तो नागता अपि तु प्रत्यावर्तिता अस्माकं जीविताशाः। भवतु कदापि सुखेनोषित्वा संवदिष्यामि।" मयाऽपि भणितम्—"कथं नु, नूनमेव भवदीया महतीयं कृपा भविष्यति।" सोऽपरिचितः प्रतिवेशी फुल्लरोटिकागल्लालङ्कृतस्मितवदनो निजद्वारं पिधाय गृहान्तर्वर्ती बभूव। अहमपि प्रातर्भ्रमणाय दुग्धानयनाय मन्दं मन्दं ततो निर्गतवान्।

महानगरेषु जीवनवृत्तिः एतावती सङ्कुचितैकाङ्गीभूता वर्तते यदेकस्मिन्नेव गृहे निवसतां जनानां परस्परं परिचयोऽपि नैव भवति। यदि स्वीयं प्रयोजनं नास्ति, द्वारे वा नामपट्टं न स्यात् तर्हि समक्षं पार्श्ववर्तिनं वा प्रतिवेशिनं ज्ञातुं कथं कश्चिदायासं करोतु! अयं किं करोति? कुत्र याति? कदाऽऽयाति? परिवारे कियन्तः सदस्याः? एतत्सर्वं ज्ञातुं कस्यावकाशः? चिरं विलसतु दूरदर्शनं नाम यन्त्रं यदवकाशदिवसेऽप्युपलभ्यमानमवसरमिदानीं प्रतिबध्नाति। स्थिरभूते जलराशाविव सामाजिकजीवनेऽप्यैकान्तिका दुर्गन्धवृत्तिविकृतिर्जायते। एवं चान्यच्च विचारयता मया मनसि प्रतिवेशितत्त्वचिन्तनमेव कृतम्। यदि तत्तत्त्वं भवते रोचते, शृणोतु क्षणं विरम्य सावधानमनसा—

पूर्वजानां सुकृतेन महत्पुण्यबलेन वा।
सत्प्रतिवेशिसंयुक्तो नरस्य निलयो भवेत्॥
नास्ति शत्रुर्न न वा मित्रं तथा जन्तुर्धरातले।
शिरस्युरस्यासीनो हि स्याद्यथा प्रतिवेश्मकः॥
प्राप्य कोऽपि कथं जीवेद् दुर्मुखं प्रतिवेशिनम्।
यथान्धकूपे पतितो वृश्चिकक्रूरदंशनम्॥

तस्मिन् दिवसे तस्य प्रतिवेशिमहोदयस्य दर्शनं पुनर्नाभवत्। अपरेद्युः प्रातःकाल एव द्वारस्था विद्युद्घण्टिका गम्भीरनादमुखी बभूव। "कः कोऽस्ति भोः ?" इत्युच्चार्य यावदहं गवाक्षकपाटमुद्घाट्यावलोकयामि तावत्सोऽपि नमस्कृतिपूर्वकमहो, भवन्तो दैनिककृत्येषु व्यापृताः, भवतु, अहं त्वेवमेवागतोऽस्मि, गच्छामि, पुनरन्यावकाशे काले आगमिष्यामीत्युक्त्वा शशविषाण इव प्रणष्टः। विचित्रानुभावोऽयं मे प्रतिवेशी। अकाले समुपस्थितः कालमेघ इव कञ्चिद्घोषं कृत्वाऽपयाति। पुनरन्यस्मिन् दिवसे घण्टिकानादमकृत्वैव, "अहो, डाक्टरप्रभाकरमहाभागाः गृहे सन्ति न वे"त्युच्चैराकार्य द्वारकपाटे हस्तप्रहारं विधाय तस्थौ। तस्मिन् काले फेनिललिप्तकपोलः श्मश्रुकर्तनकर्मणि व्यापृतोऽहं श्रुत्वाऽप्यश्रवणमुद्रया यथास्थितिं परिपालयामि किन्तु मम भार्या महानसस्था महतादरेण स्वरेण मां प्रबोधितवती—"अयि न शृणोसि! कश्चिदाकारयति द्वारस्थः।" मयोक्तम्—"गच्छ, त्वमेव गत्वा पश्य।" तद्गमनसूचकं नूपुरक्वणनमथ च कपाटयोर्निरर्गलतां निशम्यातिथ्यं प्रति निश्चिन्तोऽहं प्रारभ्य चोत्तमजना न परित्यजन्तीति न्यायेन तत्कार्यं समाप्य स्नानगृहे प्रविष्टवान्। सा तु द्वारस्थैव तेन सह चिरं व्यलपत्। निवर्त्य च मां भणितवती—"प्रतिवेशी काकोदरमहोदय आसीत्। तस्य बहुलाक्षरं नाम नाहं स्मरामि। किन्तु स मे सज्जनः प्रतिभाति। अद्य सायंकाले सपरिवारः सः मया चायपानगोष्ठ्यां समाहूतः। सोऽपि त्वया सह संल्लपनाय महदुत्सुकः प्रतीयते। मम मौनस्वीकृतिमालभ्य सा पुनः महानसकर्मणि दत्तहस्ता बभूव।

यथानिर्दिष्टे सायंकाले सीमितपरिवारः काकोदरमहोदयः स्मितवदनो मम गृहं समागतः। अनावृतकपाटं द्वारं विधाय मम गृहिणी स्वागतं व्याजहार। अतिथिकक्षे चोपवेशयामास। मयाऽपि तत्रागत्याभिवादनविधिना सभाजनं कृत्वा काकोदरसमीपे आसनं गृहीतम्। तेनोक्तेन ज्ञातं यदयं जनो महाराष्ट्रीयः स्वपैतृकपरम्परया पूजादिकर्मभिः लक्ष्मीपतिमाराधयताऽत्र निवसति। किन्तु न केवलं तेनेयमाकाशवृत्तिरेव स्वीकृताऽपि तु स्थानीये कस्मिंश्चित् कार्यालये सः सहायकपदमप्यभिधत्ते। तन्नामाक्षराणि विराजन्ते श्रीनरहरिवामनगदाधरविष्णुशास्त्रीकाकोदरः।

अथ मम गृहिणीकरनिर्मितसुस्वादुव्यञ्जनास्वादनेन सह मधुरालाप आरब्धः। को न याति वशं लोके मुखं पिण्डेन पूरितः? काकोदरमहोदयस्य परिवारः व्यञ्जनान्यास्वाद्यास्वाद्य जलमलं निपीयाकण्ठमुपभुज्य निरवकाशोदरः सञ्जातः। आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेदिति मन्त्रस्य सुष्ठुप्रयोगविधिर्मयात्रैव दृष्टः। ससुखमाहारग्रहणं सम्पाद्य बाला इतस्ततः क्रीडासक्ता जाताः। काकोदरस्यान्तिमा प्रसूतिस्तत्रैव शोभासने शयनमभजत्। ते स्त्रियौ गृहाजिरे गत्वा चतुष्पद्यामासीने जिह्वाकण्डूतिन्यायमवलम्ब्य चिरं तस्थतुः। सम्भाषणपटुः काकोदरो मह्यमवसरमदत्त्वैव स्वमुखं वाग्व्यवहारे नियोजयामास। वक्तृभिः प्रायेण श्रोतृकष्टं नानुभूयते। यदि श्रोता घोरसङ्कोचवृत्तिकः स्यात्तर्हि तु कथैव का! ते निरर्गलं प्रलपन्ति। किन्तु काकोदर एतादृशो नास्ति। स तु श्रोतृरुचिमनुभूयैव किमपि कथयति। तस्यालापेन मयाऽवगतं यत्सः गार्हस्थ्यसङ्कटापन्नेऽपि जीवने साहित्यरुचिं धारयति। एतदर्थं सः स्वकार्यालयसमयस्य सदुपयोगं करोति। तत्र तस्य सहकर्मिणो यदा स्वनियोगशून्याः दुस्साधनैरन्यैः कालं क्षपयन्ति तदा काकोदरः स्वासनगत एव सत्साहित्यैश्चित्तं रमयति। यदाकदा काव्यरूपं स्वहृद्गतभावं कार्यालयप्रयोज्ये कर्गदेऽवतारयति। एतद्वृत्तं तेन महताडम्बरमोदेन वर्णितम्। प्रसङ्गतः तेन स्वकीया काव्यनिर्मितिरपि प्रस्तुता सायासशब्दयोजनारूपिणी। बाध्यतया मयाऽपि साधुवादपुरस्सरं तत्काव्यं प्रशंसितम्।

अथ स्वकाव्यप्रसङ्गं समाप्य काकोदरः सप्रश्रयमुवाच—"भवत्साहित्यं बहुधालोच्य महती प्रेरणा जागर्ति। मन्येऽहं तद्रससिक्तः पाषाणोऽपि स्निग्धतरलस्यन्दको भविष्यति का कथा साहित्यरसार्द्रमनसां रसिकानाम्? भवत्साहित्यादर्शे मया यथा श्रीमच्छबिरालोकिता तथैवात्र प्रत्यक्षीकृता। भवत्सान्निध्यं प्राप्य महान् मोदो मे जातः। मां सेवकं मानयतु। सेवादेशे सङ्कोचो न कार्यः। प्रस्तुतोऽयं सेवकः सर्वबाधापनयनाय। अत्र निवसतो मे बहूनि वर्षाणि व्यतीतानि। भवन्तोऽत्र नवागता एव। अतः सर्वं साधयिष्यामि। विचित्रैवेयं वसतिः। अत्रत्या जनाः स्वार्थपराः सहानुभूतिहीनाः शूकरवृत्तयो न तु सुकरवृत्तयः, सदानभोगा न तु सदानभोगाः, शीलधर्मा न तु शीलधर्माः, सद्द्वेषा न तु सद्द्वेषाः, सदाशया न तु सदाशयाः, विप्रयुक्ता न तु विप्रयुक्ताः, अग्निकर्माणः न त्वग्निकर्माणः, कुशासना न तु कुशासनाः, सद्वृत्तमुक्ता न तु सद्वृत्तमुक्ताः,

निष्पक्षा न तु निष्पक्षाः, अपि च श्वजनपोषका न तु स्वजनपोषकाः। अत्र दिनेशो रात्रौ चरति, मङ्गलोऽप्यमङ्गलं विदधाति, चन्द्रमा विषमुद्गिरति, सत्यदेवोऽसत्यं ब्रवीति, सुभाषोऽपि कुभाषते, प्रदीपोऽन्धकारे निमज्जति, वृद्धा अपि बालाः सन्ति। इह तु अशोकः सशोकः, अनक्षाः साक्षाः, त्रिनेत्रो नेत्रहीनः, परुषाः पुरुषाः, अनार्याः नार्यः, प्रबला अबलाः, द्विजभक्षिणो द्विजाः, विनायका नायकाः, विकलाः सकलाः कलावन्तः, सूत्ररहिताः सूत्रकाराः, पृथक्कारिणो मिश्राः, पाठहीनाः पाठका, कृष्णवर्णाः शुक्लाः, अनध्याया उपाध्यायाः, निर्वेदाश्चतुर्वेदिनः, वेदरहितास्त्रिवेदिनः, पण्डारहिताः पाण्डेयाः, भीरवः सिंहाः, अकुशलाः कुशवाहाः, प्रजाहीनाः प्रजापतयः, हरिनामविमुखा हरिजनाः, अब्राह्मण्याः ब्राह्मणाः, क्षताश्छत्रच्युताः क्षत्रिणो, वेशजीविनो वैश्याः, आचारहीना आचार्याः, अशास्त्रवेत्तारः शास्त्रिणो दृश्यन्ते। एवं चान्यच्च बहुशो विजल्प्य वसतिवैशिष्ट्यं बहुधा संसूच्य सुचिरं कालं विलोप्य काकुकुशलः काकोदरः कथंकथमपि ममाशयमवबुध्य प्रभूतस्वल्पाहारभारगुरुरपि स्वाभीष्टकथनेन विगतचिन्तालघुरभवत्। बहुधाऽऽभारं प्रदर्श्य सपरिकरे गते तस्मिन् मम भार्या समागत्य मामवादीत्—"भगवत्कृपया सज्जनः प्रतिवेशी प्राप्तोऽस्माभिः। यथा काकोदरः सुहृत्तथैव तस्य परिवारः।" मयोक्तम्—"भवतु नाम काकोदरः प्रतिवेशी सुजनः। किन्तु प्रतिवेशिनस्त्वन्येऽपि सन्ति। अस्मिन्नेव गृहे द्वितीये तृतीये च प्रखण्डे द्वौ प्रतिवेशिनौ गुप्तश्रीवास्तव्यौ स्तः। गृहाद्बहिरपि सन्निकृष्टोभयोः पार्श्वयोः विराजेते सिंहशर्माणौ। एकः पादेन खञ्जोऽपरोऽक्ष्णा काणः। एकः स्वकन्यकाः प्रत्यन्धोऽपरः स्वभार्यां प्रति बधिरः। एकः पाखण्डाचारदक्षोऽपरो भ्रष्टाचारभाण्डारकक्षः। द्वावप्यहमहमिकारोगातुरौ।

अथ काकोदरमहोदयस्तु प्रायेण प्रातःकालिकचायपानं मयैव सह कर्तुमारब्धवान्। तत्प्रतीकारतया सः सदैव, 'मद्योग्या काचित्सेवा भवेदिति' निवेदयति। इतरेषां प्रतिवेशिनामाचरणं मत्कृते सुखप्रीतिनिवारकमभूत्। सिंहमहोदयस्य परमप्रीतिपालितः पशुपुंगवः पाश्चात्त्यप्रजातिकः सारमेयः प्रातर्विहारकाले मम गृहद्वाराय पुरीषोपहारं समर्पयति। शर्ममहोदयस्तु मम क्वचित्प्रस्थानकाले मां किमपि प्रष्टुमवश्यमेवोपस्थितो भवति। मम गृहान्तःप्रतिवेश्ययोस्तु कथैवान्या। उपरिखण्डे निवसतोः

गुप्तमहोदयस्य प्रियतमा पत्नी स्वगृहावस्करं गवाक्षादेवं क्षिपति यत्सर्वमेव मम द्वार एव पतति। साऽभियन्तृपत्नीत्वं ख्यापयति नित्यनूतनैस्सेर्ष्यव्यंग्य-कटुकूटवचोभिः। अपरोऽपि श्रीवास्तव्यपरिवारो विचित्रमाचरति। तस्य याचनाप्रकारैर्वयं प्रतिदिनमेव पीडिताः स्मः। कदाचित्तस्य गृहे लवणं न भवति, कदाचिन्मार्जारेण दुग्धं पीतं भवति, कदापि शर्कराया अभावः स्यात् क्वचिच्चायपत्रचूर्णञ्च न भवति। एतत्सर्वमस्माभिर्देयम्। मास-स्यान्तिमेषु दिवसेषु प्रायेणास्य परिवारस्यातिथिसपर्या ममैव गृहाश्रिता भवति। यदाकदा निशीथे पानगोष्ठीसुखमनुभूय गृहागतस्य प्रमत्तस्य श्रीवास्तव्यमहोदयस्यानर्गलप्रलापैर्भीता निद्रा दूरमपसर्पति श्रोत्रवृत्तिश्च धन्यतां व्रजति। दम्पत्योः कलहकटुरवोपबृंहिताः बालकानां रोदनसरण्यो महच्छिरोवेदनामुत्पादयन्ति। संसक्तबदरीवृक्षकण्टका इव कदलीपत्र-मिवास्माकं हृदयं विदारयन्ति। महती प्रतिवेशिपीडा स्वल्पौषधिश्च काकोदरः। दैवो मे शुभं विदधातु।

लोको दुस्तरो जलधिर्विघ्ना वीचिविवर्तकाः।
जीवनं सुमहद्रत्नं यादांसि प्रतिवेशिनः॥
निर्मितेयं कथा कान्ता प्रतिवेशिचर्याश्रिता।
आकाशवाणीप्रसादाल्लोके सा प्रचरिष्यति॥
समाहितः शृणोत्येनां यो जनो हितसाधकः।
न जायते क्वचिद्बाधा तस्य हि प्रतिवेशिनी॥
सरहस्यं कथातत्त्वं यो जानाति विचक्षणः।
प्रतिवेशिसम्परायेऽपि ससुखं स जीवति॥

हिन्दी-रूपान्तर

# कथाकौमुदी

( प्रथम किरण )

: १ :

## गङ्गास्नान

मेरे वृद्ध पितामह यह पद्य प्रायः ऊँचे स्वर से गाया करते थे—

"काशी में शिव के चरणों में अतिदुर्लभ है रहना।
अति पुण्यों से ही सम्भव है गङ्गावगाहन करना॥"

धार्मिक जन कहते ही हैं—काशीवास का सबसे बड़ा लाभ है—गङ्गास्नान और विश्वनाथ-दर्शन। काशी में रहते हुए जिन्हें गङ्गास्नान में रुचि नहीं है, वे निकृष्ट मनुष्य हैं। यद्यपि मैं बालक था फिर भी पितामह के मुख से निकले इन वचनों का मेरे मन पर प्रभाव पड़ा। मेरी दृढ़ इच्छा उत्पन्न हुई—'यदि जीवन में कभी काशीवास का अवसर मिला, तो मैं नियमपूर्वक प्रतिदिन गङ्गास्नान करूँगा।'

समय की गति तीव्र होती है। अध्ययन करते हुए मेरा बचपन बीत गया। युवावस्था आने पर विवाह करके मैं गृहस्थाश्रम में प्रविष्ट हुआ। ईश्वर की कृपा अथवा मेरी दृढ़ इच्छाशक्ति के फल से वाराणसी के एक विश्वविद्यालय में मैं नियुक्त हो गया। पदभार ग्रहण करने के पश्चात् जब मैं पूर्णतः व्यवस्थित हो गया, तब गङ्गास्नान सम्बन्धी मेरी श्रद्धा उत्पन्न हुई। प्रतिदिन प्रातःकाल गङ्गास्नान करना है—ऐसा निश्चय करके, स्नान योग्य कितने घाट हैं? उनका क्या महत्त्व है?—यह सब मित्रों से पूछकर मैंने जान लिया। इस प्रकार मैंने निर्णय किया कि

'पञ्चगङ्गा' नामक घाट पर स्नान करना है। क्योंकि पञ्चगङ्गा घाट मेरे निवास से सबसे अधिक समीप और धार्मिक दृष्टि से महत्त्वपूर्ण भी है।

एक दिन शाम के समय निकलकर मैंने पञ्चगङ्गा घाट तक के रास्ते को अच्छी तरह देखा। ईश्वरगङ्गी स्थित अपने आवास से निकलकर, मृत्युञ्जय महादेव मन्दिर के पास से गुजर कर, भैरवनाथ मन्दिर के दक्षिण होकर, चौखम्भा वाली गली पार करके इधर-उधर घूमते हुए, लोगों से भरे चबूतरों पर नजर डालता हुआ, जहाँ-तहाँ पूछकर रास्ते के बारे में शङ्का को दूर कर, रास्ता देखने के अन्तिम चरण में बिन्दुमाधव मन्दिर के आँगन में पहुँच कर, पञ्चगङ्गा घाट पर नीचे जाने की इच्छा से मैं लम्बी पत्थर की सीढ़ियों की कतार को बड़ी मुश्किल से पारकर उतर पड़ा। लीलापूर्वक प्रवाहित होती हुई पवित्र जल वाली भगवती भागीरथी का दर्शन किया। सिर झुकाकर प्रणाम करके, किनारे जाकर, वहाँ एक तख्ते पर बैठकर पवित्र जल से आचमन करके कुछ क्षण तक वैठा रहा। पुनः उठकर उसी मार्ग से वापस घर आ गया। इस प्रकार लौटकर रास्ते के चिह्नों को दिमाग में बैठाकर निश्चिन्त हो गया। उस समय मैं सोचने लगा—'भैरवनाथ मन्दिर तक का मार्ग तो चलने योग्य अच्छा है। किन्तु उससे आगे की गलियाँ, जिनसे हम घाट तक पहुँचते हैं, अत्यन्त सँकरी और टेढ़ीमेढ़ी होने के कारण भूलभुलैया करने लगती हैं। इन गलियों के दोनों ओर गगनचुम्बी भवन खड़े हैं, जिनसे अवरुद्ध सूर्य की किरणे यहाँ तक नहीं पहुँच पातीं। जेठ की कड़ी धूप के दिनों में भी ये गलियाँ तिमिराच्छन्न रहती हैं। निश्चय ही कालिदास ने कभी वाराणसी नहीं देखी थी अन्यथा वह (कुमारसम्भव में) हिमालय की गुफाओं की उदारता की प्रशंसा कैसे करते कि वे दिन में सूर्य से डरे हुए अन्धकार समूह को अपने अन्दर शरण देकर उनकी रक्षा करती हैं। ये गलियाँ भी अपने इस गुण से उन गुफाओं की तुलना करने में समर्थ हैं। गलियों के अपने स्थान से हटे हुए (फर्श के) पत्थर और मकानों की जर्जर दीवारें निश्चय ही भय पैदा करती हैं। इन गलियों में गन्दगी की चरम सीमा दिखाई पड़ती है। स्मरण मात्र से ही हृदय काँपने लगता है। इन पुण्यप्रद तीर्थ-स्थानों में ऐसी दुर्व्यवस्था लोग कैसे सहते हैं? अवश्य ही वहाँ रहने वाले लोग उदासीन रहते हुए किसी तरह अपनी

जिन्दगी काटते हैं। हजारों स्नानार्थी और भी दूसरे लोग इसी रास्ते प्रतिदिन मुँह ढँककर और नाकें बन्दकर आते-जाते हैं। अच्छा, मुझे भी तो उसी मार्ग से जाना है।' मन के उद्वेग को दबाकर, ब्राह्ममुहूर्त में गङ्गास्नान के लिए अवश्य जाना है—यह निश्चयकर सो गया।

दूसरे दिन ब्राह्ममुहूर्त में सोकर उठा और शौचादिक्रिया से निवृत्त हो गङ्गास्नान के लिए चल पड़ा। भैरवनाथ मन्दिर तक का रास्ता तय करके आगे कदम बढ़ाते हुए मैंने देखा कि प्रायः दस से अधिक गायें एक दूसरे से सटी हुई पूरे रास्ते को छेंककर जुगाली करती हुई बैठी हैं। कोई भला कैसे जाय ? पाँच-छः वृद्धा स्त्रियाँ भी कुछ दूर पर किसी के आने की प्रतीक्षा करती हुई, मुझे देखकर प्रसन्न हो गईं कि यह इन गायों को हटाकर रास्ता साफ कर देगा। मुझे भी जाना ही था। अतः किसी-किसी तरह उन गायों को हटाकर स्नानार्थिनी उन वृद्धाओं के पीछे चलता गया। चौखम्भा वाली गली पारकर ज्यों ही हम सँकरी गली में पैठे, एकाएक सब कुछ अन्धकार में डूब गया। क्योंकि बिजली गुल हो गई। वाराणसी के निवासी यहाँ की बिजली आपूर्ति की दुर्व्यवस्था को अच्छी तरह जानते हैं। आने-जाने के अनियतक्रम वाली यह देवता, वाराणसी में 'चञ्चला' अपना यह नाम प्रमाणित करती है—इसमें कोई सन्देह नहीं। रास्ता अच्छी तरह जानने के कारण वे वृद्धायें तो बेखटके चली जा रही थीं किन्तु गली की ऊबड़ खाबड़ जमीन पर मेरे पैर इधर-उधर पड़ रहे थे। "हे देवि गङ्गे, रास्ते को प्रकाशयुक्त करो"—जब मन ही मन स्मरण करके मैंने ज्यों ही सावधानी से पैर आगे बढ़ाया त्योंही मेरे ऊपर सहसा कूड़े का ढेर आ गिरा। मैं तो जड़ हो गया। धूल गुबार के साथ ही रोटी के टुकड़े, फलों के छिलके और दूसरे भी कतवार मेरे शरीर को सानते हुए जमीन पर बिखर गए। वहाँ से आगे निकलकर, गर्दन घुमाकर जब मैंने दृष्टि डाली तब एक खुली हुई खिड़की दिखाई पड़ी जिससे झीना-झीना प्रकाश बाहर आ रहा था। मैंने अनुमान लगाया कि इसी खिड़की के रास्ते कोई गृहिणी अपनी अटारी की बुहारन मेरे सिर पर डालकर अन्दर चली गई। यह कैसी विडम्बना! ये स्त्रियाँ गली में बिना देखे ही सहसा कूड़ा-करकट नीचे गिरा देती हैं। 'ऊँच-निवास नीच करतूती' सोचकर मेरा हृदय क्षुब्ध हो गया। ईश्वर की

कृपा से सही सलामत शरीर से स्नान करने के लिए चलता गया क्योंकि उस कूड़े में कोई चोट पहुँचाने वाली भारी चीज न थी।

किसी तरह पञ्चगङ्गा घाट पर पहुँच गया। सीढ़ी से उतरा हुआ मुझे स्नानार्थी जानकर घाटिये मुझे लक्ष्य करके—"यहाँ आइए, यहाँ आइए"—पुकारने लगे। उनकी पुकार पर ध्यान न देकर मैंने एक तख्ते पर अपने वस्त्र रखकर गङ्गास्नान किया। वहाँ के घाटिये को संकल्प पढ़वा कर दक्षिणा धन देकर जब मैं चलने लगा, तभी उसके बगल वाला एक घाटिया मुझे लक्ष्य करके बोल उठा—"आपका भला क्या दोष? सङ्गति तो भाग्य के अधीन होती है। आप बेचारे ठगे गए। यह तो शुद्ध संकल्प बोलना भी नहीं जानता। केवल माथे पर चन्दन चुपड़कर बैठा रहता है। आप पूछिए तो सही कि उसे नहाये कितने दिन हो गए?" उसकी ये बातें सुनकर दूसरे (इस) ने फुफकारना शुरू कर दिया—"जा-जा; चुपचाप अपना काम कर। व्यर्थ ही दूसरों की चिन्ता में दुःखी होते हो। कहो तो, तुम्हारे अधोवस्त्र कब साफ होते हैं? ईर्ष्यावश मुझ पर आक्षेप करते हो?" और फिर मुझसे बोला—"श्रीमान् जी, आप जाइए। यह चाण्डाल, लड़कपन से ही अपनी बकवास से दूसरों पर दोषारोपण करता है। इस समय भी ऐसे ही बक रहा है। मुझे बिल और राजकुमार के पेट में रहने वाले दो साँपों की, एक दूसरे का भेद खोलने वाली कहानी याद आ गई और 'यह, इन दोनों का आजीविका-जन्य वैर है'—ऐसा विचार कर मुस्कुराकर दोनों के ऊपर नजरें डाल-कर वहाँ से चल पड़ा।

ऊपर सीढ़ी चढ़कर, मन्दिरों में देवताओं का दर्शन करके जब मैं चलने लगा तभी एक जगह लोगों की भीड़ दिखाई पड़ी। कुतूहल वश जब मैं वहाँ पहुँचा तब जोर-जोर रोते हुए चार-पाँच वर्ष के एक बालक को देखा। लोग दूर से ही उसका नाम पूछ रहे थे। कुछ लोग आकर उसे देखकर लौट जाते थे। वहाँ पहुँचकर मैंने उसे गोद में उठा लिया, उसके आँसू पोंछकर, पुचकार कर चुप कराया। वह डरी हुई आँखों से सब ओर ताकता था। पूछने पर केवल 'अम्मा-अम्मा' उच्चारण करता था। बालक को कुछ आश्वस्त जानकर लोग अपनी-अपनी राह चले गए। यदि कोई पुलिस वाला दिखाई पड़ जाता, तो इस बालक को

सौंप कर मैं भी अपने घर जाता—ऐसा सोचकर इधर-उधर पुलिस वाले को खोजती हुई मेरी दृष्टि विफल ही हो गई क्योंकि मैंने अनुभव किया है कि प्रायः ऐसे अवसरों पर ये पुलिस वाले दिखाई देते ही नहीं। 'अब क्या करूँ ?'—इस प्रकार चिन्ताग्रस्त मुझको एक सज्जन ने सलाह दी कि 'मन्दिर में किसी पुजारी को सौंपकर आप भी घर जाइए। जिसका भी यह बालक होगा, वह स्वयं ही खोजता हुआ इधर आकर इसे ले जायेगा।' किन्तु मुझे यह अच्छा न लगा। इसी बीच एक स्त्री रोती हुई वहाँ आ गई। उसे देखकर वह बच्चा भी 'अम्मा' पुकारकर, बलपूर्वक मेरी गोद से उतरकर उसकी ओर दौड़ पड़ा। वह भी जल्दी से उसे उठाकर छाती से लगाकर बार-बार चूमने लगी। कारुणिक दृश्य था। प्रसन्नमुख बालक और व्यथारहित उस स्त्री को देखकर वहाँ सभी लोग प्रसन्न हो गए। तब उस स्त्री को झिड़कते हुए समझाकर मैंने कहा—"अबोध बालक को छोड़कर अच्छा पुण्य कमा रही हो! नहीं जानती कि कैसा (खराब) समय आ गया है? यदि यह बालक किसी अपराधी के हाथ पड़ जाता, तो तुम्हें कैसे मिलता ? जीवन भी इसका नारकीय हो जाता। अपराधी ऐसे ही बालकों को ढूँढ़ते रहते हैं और मौका पाकर उड़ा ले जाते हैं। उनका अङ्ग-भङ्ग करके भीख मंगवाते हैं। बालक की रक्षा से प्रमाद मत करो (सावधानी पूर्वक बालक की देख-भाल करो)।"

मेरी बातें सुनकर, पुत्र का मुख निहार कर, आँसू बहाती हुई वह स्त्री कहने लगी—"मैं आपकी कृतज्ञता कैसे प्रदर्शित करूँ ? ईश्वर मुझ पर दयालु है। मैं इसके जागने से पहले ही प्रतिदिन गंगास्नान करके घर पहुँच जाती हूँ। आज देर से जागी और मेरे साथ ही यह भी जाग गया। जब मैं गंगास्नान के लिए चली तब यह भी मेरे पीछे निकल पड़ा। इसे उठाकर, इसके पिता की बगल में लिटाकर उन्हें जगाकर, बिना कुण्डी चढ़ाये ही द्वार को बन्द कर झटपट मैं घर से निकल पड़ी। अनुमान करती हूँ कि इसके पिता फिर सो गए। यह भी बाहर निकलकर यहाँ आ पहुँचा। मैं इत्मीनान से नहाकर जब घर वापस पहुँची, तब इसे घर में नहीं पाया। पति को जगाकर जब पूछा, तो वह भी घबड़ाये हुए, इसे खोजने के लिए निकल पड़े। मैं भी रोती हुई, घर-घर

जाकर लोगों से पूछती हुई, यहाँ आकर इसे देख रही हूँ। यही इसका वृत्तान्त है''—यह कहकर वह अपने पुत्र के साथ घर चली गई। मैं भी निश्चिन्त हो गया।

इस प्रपञ्च में बहुत देर हो गई। चलकर जब मैंने घर में प्रवेश किया तो पत्नी शोक से व्याकुल थी। वह कातरस्वर से मुझसे बोली—"आपने इतनी देर कर दी! अनिष्ट की आशङ्का से मेरे प्राण निकले जा रहे थे।" मैंने हँसते हुए उत्तर दिया—"अरी भीरु, मैं गङ्गा नहाने गया था। पुण्य जल्दी नहीं अपितु देर से मिलता है।" और फिर मैंने विलम्ब का पूरा कारण कह सुनाया। यह सुनकर वात्सल्य से करुणार्द्र होकर उसने केवल यही कहा—"जो करना चाहिए था वह प्रशंसनीय कार्य आपने किया। गङ्गास्नान से बढ़कर पुण्य प्राप्त किया।"

प्रभु-इच्छा से बनी पड़ी कथा जो गङ्गास्नान।<br>
दोषदृष्टि रख दूर ही रस लें सब विद्वान्॥

: २ :

## मतदान

ऐसा सुना जाता है कि एकबार अर्धरात्रि में शेषशय्या पर सोये हुए भगवान् विष्णु की नींद सहसा टूट गई। मृत्युलोक से उठने वाली कर्णकटु आवाजों से व्याकुल उन्होंने किसी गण को बुलाकर आदेश दिया—"जाओ पता लगाओ कि यह आवाज कहाँ से और क्यों आ रही है ?" उसने भी जाकर और लौटकर निवेदन किया—"देव, पृथ्वी पर भारतवर्ष में यह ध्वनि सुनाई पड़ रही है। वहाँ किसी निर्वाचन के प्रपंच में लगे हुए लोग ध्वनिविस्तारक यन्त्रों से बहुत शोर मचा रहे हैं। इस विषय में आगे आप ही प्रमाण हैं।" इस प्रकार निवेदन कर वह जैसे ही चुप हुआ, वैसे ही देवर्षि नारद सहसा पहुँच गए। उस प्रकार नारद को आया हुआ देखकर, नारायण ने आश्चर्य से आँखें फाड़कर, स्वागत वचन का प्रयोग कर पूछा—"हे देवर्षि ! इस समय कहाँ से (आ रहे हो) ? मेरे चित्त में बड़ी उत्कण्ठा समायी हुई है। तो बताओ और मेरी जिज्ञासा दूर करो।" मुस्कुराते हुए नारद ने नारायण से कहा—"आप जैसे लोगों के लिए कुछ भी अज्ञात नहीं है। स्वामी केवल मुझे गौरवान्वित कर रहे हैं। फिर भी यदि आपके मन में कौतूहल है, तो सुनिये—आप जानते ही हैं कि भारत में गणतन्त्रीय शासन प्रणाली है। वहाँ इस समय लोकसभा के संघटन के लिए निर्वाचन-यज्ञ हो रहा है। जिसमें यजमान बने हुए नेता गण रात दिन अपने दल के प्रत्याशी की विजय चाहते हुए, प्रचार में लगे हुए, जोरशोर से चिल्लाते हुए, झगड़ते हुए ध्वनि प्रदूषण कर रहे है। इस निर्वाचन यज्ञ की पूर्णाहुति मतदान से होगी। मत-गणना के पश्चात् विजय घोषणा होगी, वही इस यज्ञ का फल है। विजयी प्रत्याशी ही कल्पवृक्ष से युक्त स्वर्ग के समान लोकसभा में पहुँचेगा।" "नेता कौन हैं ?"—इस प्रकार दरिद्र की भूख की तरह बढ़ती हुई नारायण की जिज्ञासा का अनुभव करके नारद ने कहा—"आजकल, 'नेता'—यह सार्थक संज्ञा नहीं है। वर्तमान काल में जो मान्यता है, उसके अनुसार नेता की परिभाषा कहता हूँ—

हर हालत में जिसे चाह हो स्वार्थ सिद्ध हो अपना।
सदा चले व्यभिचार मार्ग में मनसा वाचा कर्मणा॥
घर-घर में जो सभी जनों की बुद्धि विकृत कर जाये।
बन विनीत जो स्वार्थ साधता वह नेता कहलाये॥

ये नेता दो प्रकार के होते हैं—सनातन और सामयिक। सनातन नेता पारम्परिक भी कहे जाते हैं। उनके वंश में गर्भ से ही परिपक्व नेता के गुणों से सम्पन्न बच्चा जन्म लेता है। सामयिक नेता वे होते हैं जो किसी प्रकार अपने स्वार्थ साधन लग जाते हैं। ऐसे नेता किसी राजनीतिक दल में शामिल होकर अपने हित चिन्तन मे लगे रहते हैं। जैसे ही उन्हें यह अनुभव होता है कि हमारी स्वार्थपूर्ति में बाधा पड़ रही है, उसी क्षण वे उस दल को छोड़कर दूसरे दल की ओर मुड़ जाते हैं, अपना नया दल बना लेते हैं अथवा निर्दल हो जाते हैं। जो नेता नहीं होता, उसे निर्वाचन में प्रत्याशी बनने का अधिकार नहीं होता। निर्वाचन के पश्चात् जिस राजनीतिक दल का बहुमत होता है, वही शासनारूढ़ होता है। स्वल्पमत वाला विरोध पक्ष उस सत्तारूढ़ दल को अनुशासित करता है।

भारतवर्ष में निर्वाचन भी बहुत होते हैं। कभी लोकसभा का, कभी विधानसभा का और कभी ग्राम सभा का। उन-उन संघों का निर्वाचन भी महत्त्वपूर्ण होता है। कहीं अध्यापक संघ, कहीं छात्रसंघ, कहीं अधिकारी संघ, कहीं कर्मचारी संघ—ऐसे संघ भी अगणित हैं, सब में निर्वाचन-मतदान अनिवार्य होता है।"

"यह मतदान क्या है?"—नारायण ने पुनः पूछा। नारद ने हँसकर कहा—"धन्य हैं देव! जगन्नियन्ता होकर भी मतदान नहीं जानते?" कुछ सोचकर नारायण ने डरते हुए धीरे से कहा—"देवर्षि! जोर से मत बोलो। कहीं लक्ष्मी ने सुन लिया तो मेरी हँसी उड़ायेगी। ब्रह्मपुत्र, पुराणों में दान के अनेक भेद निरूपित हैं किन्तु मतदान का वर्णन वहाँ कहीं नहीं है। बताओ, यह क्या रहस्य है?"

नारद ने भी उपदेश-मुद्रा बनाकर सन्देह को दूर करना आरम्भ किया—"प्रभु! जिस प्रकार पुण्यकर्मा जहाँ परोपकार के लिए तरह-

तरह के दान करते हैं, उसी प्रकार यह मतदान भी परोपकार के लिए ही होता है। जैसे द्रव्यदान, अन्नदान, वस्त्रदान, जलदान, भूदान, गोदान, कन्यादान, विद्यादान आदि बहुत से दान प्रचलित हैं वैसे ही यह मतदान भी है। पाखण्ड पुराण में मतदान की महिमा अनेकत्र गायी गई है—

**दान द्रव्य का, अन्नवस्त्र का, कन्यादान महाफलशाली।**
**सब दानों से बढ़कर वैसे ही मतदान महाबलशाली॥**

यदि आप मतदान की महिमा सुनना चाहते हों, तो मैं वीणा बजाने के साथ इसे सुनाऊँ!"

उत्कण्ठित नारायण ने कहा—"नहीं, नहीं नारद! इसे सुनने से क्या? मैं तो प्रत्यक्ष मतदान देखना चाहता हूँ। है कोई उपाय?"

नारद ने हँसकर कहा—"हे संसार के स्वामी! आप भी क्यों बच्चों की तरह पूछते हैं? आपके लिए भला दुष्कर क्या है? यह चतुरानन पुत्र सेवाकर्म (अनुसरण) में बहुत कुशल है। वेष बदल कर हम दोनों अभीष्ट कार्य सम्पन्न कर लेगें। अवसर के अनुकूल पत्रकार का वेष धारण करें। कलियुग में भी भारतभूमि आपके चरण-स्पर्श का सुख प्राप्त करे।

अगले दिन इन दोनों पत्रकारों ने भारतवर्ष के विभिन्न लोकसभा क्षेत्रों का पर्यटन आरम्भ कर दिया। सर्वप्रथम काशी में भगवान् विश्वनाथ को प्रणाम करके, अयोध्या और मथुरा में जाकर, समय की कमी का अनुभव करके राजधानी दिल्ली के लिए प्रस्थान किया। वहाँ घूमकर देश के विभिन्न क्षेत्रों में निर्वाचन प्रचार देखने की इच्छा से, योगबल से सर्वत्र घूमते हुए, सभी प्रान्तीय राजधानियों में, प्रमुख नगरों में, ग्रामों में; समुद्र से लेकर हिमालय पर्यन्त घूमते हुए, सभी राजनीतिक दलों और निर्दलीयों के निर्वाचन कार्यालयों को भी पवित्र किया। एक स्थान पर उन दोनों ने सर्वदलीय प्रचार सभा भी देखी। पत्रकार रूपी नारायण नारद जब वहाँ पहुँचे तभी एक अभ्यर्थी महाशय ने अपना घोषणा पत्र पढ़ा—"सज्जन श्रोताओं! हमारा घोषणा पत्र आप सावधान होकर सुनें। इस समय इस देश में बड़ी मँहगाई है। सब जगह अनाचार-अत्याचार-दुराचार-भ्रष्टाचार रक्तबीज की तरह उत्पन्न हो

रहे हैं। नैतिक और राष्ट्रीय चरित्र का ह्रास हो गया है। कृषकों और श्रमिकों की दुर्दशा तो अवर्णनीय है। कमजोर की कहीं सुनवाई नहीं है। विद्यालयों में न तो छात्र पढ़ रहे हैं और न ही अध्यापक पढ़ा रहे हैं। सभी स्वच्छन्द हो रहे हैं। सभी स्वार्थ देखते हैं। कोई भी देशहित की चिन्ता नहीं करता। जातिवाद, क्षेत्रवाद, भाषावाद, सम्प्रदायवाद, और भी अन्य बहुत से वाद, प्रवाद, विवाद राष्ट्रीय एकता को जड़ से उखाड़ने के लिए प्रयत्नशील हैं। सभी कर्तव्यविमुख होकर केवल अधिकार चाहते हैं। अतएव यदि आप लोग राष्ट्र की सुरक्षा, मर्यादा, उन्नति, प्रतिष्ठा चाहते हैं, देश मे सुव्यवस्था चाहते हैं, राष्ट्र का और अपना हित चाहते हैं तो इस निर्वाचन में निर्भय होकर हमारे दल के अभ्यर्थी (अर्थात् मुझको) बहुमत से लोकसभा में पहुँचायें। जय भारत।"

यह सुनकर भगवान् विष्णु अत्यन्त प्रसन्न और प्रभावित हुए। किन्तु नारद ने उनका मोहभङ्ग करते हुए समझाया—"यह तो केवल जनमत को आकृष्ट करने के लिए लोक में 'चुनाव-आश्वासन' के रूप में प्रसिद्ध है। ये नेता जैसा कहते हैं, वैसा आचरण नहीं करते। विजयी होकर स्वार्थपूर्ति के अन्य बखेड़ों में फँसकर अपने निर्वाचन क्षेत्र में फिर कभी नहीं दिखाई पड़ते। उनका दर्शन दुर्लभ हो जाता है। यह सब पाखण्ड-पुराण के राजनीति खण्ड में निर्वाचनसत्यनारायणकथा रूप में ग्रथित है।" नारद के इस प्रकार समझाने पर नारायण का चित्त खिन्न हो गया। नारद ने उन्हें एकान्त में ले जाकर पूछा—"जानते हैं, प्रभु! ये अभ्यर्थी कौन-कौन हैं?" नारायण ने चुप रहते हुए ही 'नहीं जानता-' इस अभिप्राय से सिर हिलाया। नारद ने उन अभ्यर्थियों को दिखाते हुए कहा—"देखिए, देव! यह तस्कर है; यह अभिनेता है; यह क्रूर अपराधी और दुश्चरित्र है; यह भ्रष्टाचार के आरोप में निकाला गया राजकर्मचारी है। ये सभी किसी न किसी राजनीतिकदल का आश्रय लिए हुए हैं। निर्दलीयों का कहना ही क्या?" नारायण ने कहा—'ये सब नेतावेशधारी कैसे हो गए?" नारद बोले—"देव! यह रहस्य तो मैं पहले ही बतला चुका हूँ। जैसे दान लेने के लिए आप भी ब्राह्मणवेश धारण करते हैं, उसी प्रकार ये भी राजनीतिक उद्देश्य और स्वार्थपूर्ति

के लिए मतदान (वोट) प्राप्त करने हेतु नेता का वेष धारण करते हैं। इसमें कोई विशेष बात नहीं है।" नारद की यह बात सुनकर नारायण सन्तुष्ट हो गए।

एक दिन रात में विश्राम के समय उन दोनों ने निश्चय किया कि मतदान का दृश्य भी किसी तीर्थक्षेत्र में देखा जाय। इस प्रकार के बहुत से क्षेत्रों के बारे में सोचविचार कर अन्ततः नारायण ने प्रयागक्षेत्र में चलकर यह पुण्यार्जन करने का मन बनाया और नारद ने भी समर्थन किया।

प्रातः काल प्रयाग पहुँचकर सङ्गम में स्नान करके, पुण्यप्रदाता अक्षयवट की प्रदक्षिणा करके जब वे भारद्वाज आश्रम गये तो वहाँ मतदानकेन्द्र देखकर आश्चर्यचकित हो गए। पहले नगरभ्रमण और मतदानदृश्यों का अवलोकन करना चाहिए, बाद में भारद्वाज-आश्रम की खोज—ऐसा विचार कर वे दोनों उस मतदानकेन्द्र में चले गए। सिद्ध-पीठ के प्रभाव से वहाँ मतदानकार्य शान्तिपूर्वक चल रहा है—यह अनुभव करके, वहाँ से चलकर दिनभर नगरभ्रमण करते रहे।

जहाँ उन दोनों की दृष्टि पड़ी, वहीं भवन-अटारियाँ, सड़कें, गलियाँ, चौराहे तरह-तरह के चित्रों से सजाये गए, रंगबिरंगी पताकाओं से अलंकृत और पोस्टर-बैनरों से सुशोभित दिखाई पड़ रहे थे। बारात की तरह भारी भीड़ चली जा रही थी। ऐसा उत्सव, जन्म-विवाह-गृह-प्रवेशादि अवसरों पर भी नहीं दिखाई देता। नारायण तो तर्थराज की प्रचुर शोभासम्पत्ति देखकर बहुत प्रसन्न हुए। सभी मतदानकेन्द्रों पर नरनारियों की लम्बी कतारें अपने अवसर की प्रतीक्षा में लगी थीं। मतदाता प्रायः अभ्यर्थियों के वाहनों से आ जा रहे थे। एक जगह उन्होंने देखा कि कोई एजेण्ट मतदानपेटी छीनकर तेजो से भागा जा रहा है। कहीं पर झगड़ा करते हुए लोग आपस में मारपीट करते हुए, पुलिस द्वारा हटाये गये। कहीं पर बन्दूक से मारा गया कोई मर ही गया। नारद ने इनकी व्याख्या की—"देव! ये राजनोतिक साधु हैं। प्राचीनकाल में भी दानी परोपकारी जन दूसरों के लिए अपने प्राण दे देते थे। ये मतदानवीर भी, 'साधु स्वयं ही दूसरों के हितमें प्रयत्नशील होते हैं', 'सज्जनों की सम्पत्तियाँ परोपकार के लिए ही होती हैं'—इस

आदर्शपरम्परा का अनुसरण करते हुए प्राणों को त्याग देते हैं। अन्यथा, कोई दूसरा विजयी होता है, कोई दूसरा पराजित होता है, इनसे क्या ?"

एक दूसरे मतदानकेन्द्र पर जाकर अन्दर घुसकर वे दोनों देखते क्या हैं कि एक अवयस्क ही अनधिकृत मतदान कर रहा है। पूछने पर गर्वपूर्वक कहता है—"एकही बार नहीं, दस से भी अधिक बार मैंने अभी यहीं मतदान किया है।" वहाँ के पीठासीन अधिकारी के अभीष्ट चिह्न पर मुहर लगाकर नारायण और नारद ने भी फर्जी नाम से मतदान किया। यहाँ से दूसरे मतदानकेन्द्र पर जाकर, अन्दर पहुँचकर वे दोनों देखते हैं कि एक व्यक्ति बहुत से मतपत्र लेकर अपने अभीष्ट चिह्न पर मुहर लगा रहा है। पत्रकार वेष में छिपे हुए नारद ने जब उसकी फोटो खींचना चाहा, तब तक वह उनका कैमरा छीनकर उन्हें मारने के लिए तैयार हो गया। किसी तरह भागकर नारद ने अपनी जान बचाई। इस घटना से डरकर वे दोनों शीघ्र ही योगमाया से सङ्गम स्थल में पहुँच कर संकटरहित हुए। इस प्रकार भारतीय लोकतन्त्र के निर्वाचन मतदान को देखकर वे दोनों महात्मा, नारायण और नारद, अनाहत शरीर से फिर क्षीरसागर की ओर चल पड़े।

प्रभुनिर्मित यह कथा जो श्रवण करे मन लाय।
सभी दान का फल मिले निश्चय स्वर्ग में जाय ॥

: ३ :

## वर की खोज

पूर्व दिशा में मगध नामक जनपद में कोई काकपुर नाम का गाँव है। वहाँ कौवों की तरह धूर्त परोपजीवी लोग ठगी के सहारे अपनी आजीविका पैदा करते हैं। उनकी ठगविद्या के भेद और उस सम्बन्ध में रोज नई-नई खोजें सुनकर किसी की भी बुद्धि चकरा जाती है। उस गाँव में सार्थक नाम वाला 'चोखे' नामक एक नाई रहता है। वह धूर्तों के राजा रूप में प्रसिद्ध है। विधाता ने उसके पुत्र 'मोखे' को भी चोखे नाई का ही दूसरा रूप बनाया है। कुल परम्परा से चले आ रहे इस ठगी में उसकी बुद्धि तेज है। इस कार्य में उसने अपने पिता की चाँद पर भी लात रख दिया। पुत्र की सहायता से चोखे प्रतिवर्ष पहले से अधिक माल बटोरता है। चोखो-मोखे—ये दोनों ही स्वाँग भरने में दक्ष, वेष-रूप-आवाज और नाम ( पहचान ) बदलने में माहिर और चतुराई ( धूर्तता ) में वेजोड़ हैं! उन दोनों का सिद्धान्त है—

**धूर्त और मायावी ठग जो साहस प्रेमी हैं भारी।**
**वे ही खुश धरती पर, चूमे स्वयं लक्ष्मी प्यारी॥**

नये वर्ष के आरम्भ में चैत्र महीने के शुक्लपक्ष में एक दिन पुत्र ने पिता से पूछा—"पिताजी, इस वर्ष किस उपाय से कमायेंगे?" चोखे ने हँसकर कहा—"चिन्ता क्या? दैव, कोई न कोई उपाय देगा ही।" दूसरे दिन उस नाई ने पुत्र को बुलाकर अपने द्वारा सोचा गया उपाय बतलाया—"इस साल हम दोनों दूल्हा खोजेंगे।" यह वाक्य सुनकर मोखे सहसा बोल पड़ा—"हमारे घर में कन्या तो है नहीं, फिर किसके लिए दूल्हे की खोज?" चोखे ने समझाते हुए कहा—"अधिक उद्विग्न होने से क्या लाभ? हम लोग सचमुच दूल्हे की खोज थोड़े ही करेंगे। यह तो मात्र एक तरह की ठगी है। मेरी इस योजना का दो फल है—दूल्हे की खोज के बहाने लगन के समय तक धनियों के घर अच्छे स्वादिष्ट भोजन चाभकर हमलोगों की देह बनेगी और साथ ही हमारे घरों में धन की वर्षा भी होगी।" पिता द्वारा संकेतित अभिप्राय को समझकर मोखे नाई प्रसन्नता के चरम शिखर पर पहुँच गया। धनियों

की कुलवधुयें सुन्दर मधुर भोजन बनाकर उसे परोसेंगी—यह सोचकर उसकी जीभ से लार टपकने लगी। इस प्रकार की ठगी उसकी बुद्धि में कभी भी नहीं आई।

एक दिन बड़ी सुबह, दोनों पिता पुत्र ठगविद्या से धन कमाने के लिए निकल पड़े। लम्बा सफर तय करके अपने गाँव से बहुत दूर आकर, कोई गाँव देखकर, उन दोनों ने निश्चय किया कि अपनी विद्या के पहले प्रयोग की परीक्षा यहीं करनी ठीक है। इसलिए गाँव के पास पहुँचकर रमणीक तालाब में स्नान करके चोखे नाई ने सुशोभित ब्राह्मण का वेष बनाया। उसका पुत्र मोखे भी नौकर के वेष में हो गया। नूतन कपट अभिनय आरम्भ करते हुए मोखे नाई, अपने पिता की आज्ञा से वहाँ स्नान करने आये किसी ग्रामवासी को बुलाकर निवेदन करने लगा—"महाशय, यह मेरे मालिक, अपनी बेटी के लिए एक अच्छा लड़का ढूँढते हुए जहाँ-तहाँ घूम रहे हैं। इसी प्रसंग में इस गाँव में आ पहुँचे हैं। यदि यहाँ कोई कुलीन, सुप्रतिष्ठित, धनसम्पन्न, ब्राह्मण श्रेष्ठ रहता हो, जिसके घर चलकर हम लोगों की लड़के सम्बन्धी चाह, विद्या विनय सम्पन्न, सुरूप कुमार को पाकर जल में शक्कर की भाँति घुलकर मधुर सम्बन्ध स्थापित कर सके, तो कृपया मुझे बतलाइए और आप मेरा भी पुण्य ग्रहण कीजिए।" यह सुनकर उसने भी कहा—"यह तो मेरा बहुत सौभाग्य है, जो आप मुझसे पूछ रहे हैं। आपको बता रहा हूँ। इस गाँव का आभूषणरूप सुन्दर कुटुम्ब वाला एक शुक्लवंश है। उसमें लक्ष्मी और सरस्वती के एकत्र अधिष्ठानभूत, कीर्तिपावन, महिमामण्डित गौरवशाली परम पण्डित श्रीमान् शरत् चन्द्र शुक्ल नामक श्रेष्ठ ब्राह्मण शोभायमान हैं। उनके पुत्रों में सबसे बड़ा विद्यानिधि शुक्ल विवाह योग्य है। ऐसा लड़का दुर्लभ ही है। यह सम्बन्ध सर्वथा अनुकूल होगा। यदि आप की आज्ञा हो तो मैं आप दोनों को उनके घर तक पहुँचा दूँ।" नौकर का वेष बदले हुए मोखे ने ब्राह्मणवेषधारी अपने पिता के पास जाकर सब कुछ बतलाया। सुनकर प्रसन्नमुख वह (चोखे) उठ खड़ा हुआ, उस व्यक्ति को पुकार कर, उसे धन्यवाद देकर, उसी के साथ वह शुक्लमहोदय के घर चल पड़ा। मोखे भी नौकर की भाँति उसके पीछे-पीछे चलने लगा।

कोई वर ढूँढने वाला अच्छा ब्राह्मण आकर द्वार पर खड़ा है—यह सुनकर घर के अन्दर स्थित शुक्लमहोदय प्रसन्न मन से बाहर निकले और स्वागत करके उन दोनों को घर के एक सजे सजाये कमरे में ले गए। जलपान लाने के लिए किसी नौकर को आज्ञा दी। सबके बैठ जाने पर ब्राह्मणवेष में विराजमान चोखे नाई विनयपूर्वक बोला—"यह मेरा बहुत बड़ा पुण्य है कि भाग्य ने मुझे यहाँ पहुँचा दिया। आपके दर्शन मात्र से मैं अपनी मनोरथसिद्धि के प्रति आश्वस्त हो गया। आपकी बड़ी भारी प्रतिष्ठा मेरे कानों तक पहुँच चुकी है। वह आपको इस समय देखकर सत्य प्रतीत हो रही है। यह व्यक्ति ( मैं ) द्विजपुर निवासी श्री भागवत मिश्र का छोटा भाई है, जिसकी यशश्चन्द्रिका सम्पूर्ण पृथ्वी को धवल बना रही है। उनकी एक कन्या इस समय विवाह के योग्य सयानी हो गई है। आप तो जानते ही हैं कि कन्या, महान् दुःख ही है। किसी ने ठीक ही कहा है—

पुत्री पैदा हुई किसे दूँ ?–चिन्ता व्यापी।
साथ तर्क की शुरू हो गई आपाधापी॥
वहाँ पहुँच भी मिले इसे सुख या नहीं।
कन्यापितृत्व से बड़ा दुःख जग में कहीं ??

कन्या कौन-कौन देश नहीं दिखाती ? बिना मतलब के आदमी से भी घिघियाना पड़ता है। जैसे रोगी जिस किसी के द्वारा सूचित होकर जिस किसी वैद्य के पीछे भागता है उसी प्रकार कन्या का पिता भी, लोगों से जानकारी लेकर यहाँ-वहाँ लड़का खोजता हुआ भटकता है।" शुक्ल महोदय उसकी बात बीच से ही काटकर बोले—"मेरे धन्यभाग्य कि आपकी चरणधूलि से मेरी कुटिया पवित्र हुई। न जाने किस जन्म का यह पुण्य है कि आपके दर्शन मिले। महाकवि भवभूति ने ठीक ही कहा है—'सज्जनों की संगति किसी तरह, बड़े पुण्यों से ही होती है।' श्रीभागवत मिश्र को भला कौन नहीं जानता ? उनकी कीर्तिगाथा, अमृत के झरने की तरह कर्ण-कुहर में प्रवेश कर हृदय में उल्लास भर देती है। वह घर धन्य होगा जहाँ उनकी कन्या जायेगी। मैं पूछता हूँ—लड़के लड़कियाँ किस घर में नहीं हैं। इसमें कौन सी विशेषता है ? आपकी कन्या मेरी ही कन्या है। यही समधीत्व ( बराबर की सोच

समझ ) है। जैसे नदी अपने दोनों किनारों को वैसे ही कन्या भी दो परिवारों को पवित्र करती है। यह मेरा पुण्यों का बड़ा भारी फल होगा यदि ईश्वर की कृपा से यह सम्बन्ध हो जाय। आपकी कन्या मेरे घर में लक्ष्मी के रूप में आएगी—यह सोचकर मेरा मन प्रसन्नता से भर उठा।" शुक्ल महोदय ने यह कहते हुए परम प्रीतिपूर्वक मिश्र-महोदय का ( छद्मवेष में स्थित चोखे नाईका ) हाथ अपने हाथों से थाम लिया।

इसी बीच नौकर जलपान सामग्री लेकर उपस्थित हुआ। शुक्ल महोदय ने आदरपूर्वक ( जलपानग्रहण हेतु ) निवेदन किया। कपटी मिश्र महोदय ने पहले तो कन्या का पिता होने का आश्रय लेकर कुछ भी ग्रहण करने के प्रति अनिच्छा व्यक्त की किन्तु शुक्ल महोदय के हठ से विवश मन से विनयपूर्वक वह सब ग्रहण किया। नौकर के वेष वाला मोखे तो बहुत भूखा-प्यासा था (अतः) उसने शीघ्र ही जलपान कर लिया। जलपान पूरा हो जाने पर जब मोखे अपने ब्राह्मणवेषधारी पिता कपटी मिश्र महोदय के पैरों को दबाने लगा तब शुक्ल महोदय के नौकर ने उसे हटाकर स्वयं को उस कार्य में लगाया और उसे भी विश्राम करने को कहा। रास्ते की थकान के कारण दोनों ही ठग सो गए।

शुक्ल महोदय ने तो घर में जाकर अपनी पत्नी से उन दोनों के आने का प्रयोजन बतलाकर स्वादिष्ट पकवान बनाने का आदेश दिया। यह सुनकर पत्नी ने उनसे निवेदन किया—"स्वामी, अब पुत्रवधू देखने की मुझे बड़ी उत्कण्ठा है। पुत्र भी अब हर तरह से विवाह योग्य हो गया है; वह अध्ययन सम्पूर्ण कर महाविद्यालय में प्राध्यापक हो गया है। यदि मिश्र महोदय हम लोगों के स्तर के हैं तो यह सम्बन्ध पक्का कर लेना चाहिए। अब देर करने का कोई कारण नहीं दिखाई देता। कन्या के विषय में योग्यतानिर्वाह की जाँच परख करके सन्तुष्ट होने पर लगन-पत्री लिखा लेनी चाहिये। शुभकाम में देर करना ठीक नहीं।" इस प्रकार विद्यानिधि के पिता को समझाकर वह भोजन बनाने में जुट गई।

भोजन तैयार होने पर उन दोनों को जगाया गया और वे स्वादिष्ट पकवान खाकर गले तक तृप्त हो गए। भोजन के पश्चात् पान का बीड़ा देते हुए शुक्ल महोदय ने अच्छे गृहस्थ के धर्म के अनुरूप ही 'आतिथ्य

